# वाग्व्यवहारादर्शः

## (A Mirror To Sanskrit Usage)

श्रीचारुदेवेन शास्त्रिणा

प्रणीतः

मोतीलाल बनारसीदास

दिल्ली ; पटना ; वाराणसी

# वाग्व्यवहारादर्शः

**( A Mirror To Sanskrit Usage )**

सोऽयं

वाक्यपदीयस्य सँस्कर्त्रा श्रीगान्धिचरितानुवादकलाप्रस्तावतरङ्गिणी-
शब्दापशब्दविवेक-वाक्यमुक्तावली-व्याकरणचन्द्रोदयोपसर्गार्थ-
चन्द्रिकादीनामनेकेषां ग्रन्थानां निर्मात्रा व्याकरण-
महाभाष्यस्य विवरीत्रा श्रीरामकृष्णतनुजनुषा
श्रीचारुदेवेन शास्त्रिणा प्रणीतः ।

**मोतीलाल बनारसीदास**

**दिल्ली :: पटना :: वाराणसी**

# निवेदना

एतद् ग्रन्थप्रणयने कैमर्थिकी प्रवृत्तिर्ममेति पृच्छायामुच्यते—सम्प्रति प्रायशो व्याकरणाधीत्यामलंबुद्धयो लोका वाचां साधुत्वे व्यवहारस्य परम्परीणस्यानङ्गतां पश्यन्ति, तेन तत्रानादृतास्ते न तं गवेषयन्ते न चाभ्यस्यन्ते। नैतावत्येव विश्राम्यन्ति। प्रकृतिप्रत्ययप्रतिपत्तिरस्माकमस्तीति व्युत्पत्तिकोविदास्ते नूतनशब्दोत्पादनायां क्रमन्ते, व्याकरणेन शब्दा व्युत्पाद्यन्ते नोत्पाद्यन्त इति नेक्षन्ते। एवं वाग्वर्तनीं व्यवस्थितामवहेलयन्तो दैवीमिमां वाचमपभ्रंशैर्व्यतिकीर्णां कुर्वन्तोऽप्यनभिज्ञास्तस्य व्यतिकरस्येति महताऽनिष्टेन युज्यन्ते। इत्थं परिणमतो वाचां मलस्यापहतये सोहापाकृतयेऽनवद्यवाक्स्रुतेः प्रसृतये चायं मे समारम्भोऽर्थवान्नु। इहेदम्प्रथमतया परम्परीणः शिष्टजुष्टो वाग्व्यवहारः सोदाहृतिशतैर्युक्तिमद्वचोभिः शरीरबद्ध इव सन्निधापितः, प्रचरत्सु प्राधीतानां च प्रयोगेषु व्यवहारव्यभिचारश्चान्वेषमन्वेषं वितत्य निदर्शितः। अनवद्यहृद्यस्य वाचां मार्गस्य प्रदर्शने कियन्मे साफल्यमित्यत्र विपश्चितः प्रमाणम्। न मया तत्र किमपि वाच्यम्। इदं त्ववश्यवाच्यं सप्रश्रयं सदसद्विवेचनचणा गुणगृह्या अन्तर्वाणय इमां मे कृतिमामूलचूलमालोक्य विम्रक्ष्यन्ति, तावतैव च परामात्मनः कृतितामाकलयिष्यामीति

३।५४ रूपनगरे देहल्याम्
२।२।१९७६

विनीतवद् विज्ञापयति
विदां विधेयश्चारुदेवः शास्त्री ॥

# विषयानुक्रमणी

## ( पूर्वार्द्धः )

## ( अथोत्तरार्द्ध: )

ॐ नमः परमात्मने

नमो भगवते पाणिनये । नमः पूर्वेभ्यः पथिकृद्भ्यः । नमः शिष्टेभ्यः ।

अभिधेयाभिधानस्य वाचि वाचि व्यवस्थितः ।
प्रकारो विद्यते लोके कश्चिदेव स्वलक्षणः ॥१॥
शिष्टैः प्रमाणितः सम्यक् छीलितः पूर्वसूरिभिः ।
संस्कृतेऽपि प्रकारोऽस्ति नियतोऽसौ निरूप्यते ॥२॥
प्रस्मृतः प्रायशो लोको व्यवहारं तथाविधम् ।
तस्य प्रबोधनायैषा प्रवृत्ता नो निरूपणा ॥३॥
शास्त्रेष्वधीतिनो ये च ये च व्याकृतिचुञ्चवः ।
व्यवहारं व्यतीयन्ते प्राधीतैरपि ते समम् ॥४॥
अत्र सूदाहृतिस्तोमैर्व्यवहारो निरूपितः ।
प्रचरत्सु प्रयोगेषु व्यभिचारश्च दर्शितः ॥५॥

# अथ वाग्व्यवहारादर्शः

इह वयं वाग्व्यवहारमधिकृत्य किञ्चित्प्रस्तुमः । न खलु यथा तथा प्रवर्तमानो वाचो व्यवहारो नो विमर्शस्य विषयः । सामान्येन हि तेन विमृष्टेन नार्थः । न चापि यस्याः कस्याश्चिद् वाच एव स विवक्षितः । किन्तर्हि पारम्पर्यागतः शिष्टाभ्यनुज्ञातः संस्कृतव्यपदेशभाजो दैव्या वाचो विशिष्टो व्यवहार एवाभिप्रेतः । यानि यथा वा पदानि शिष्टैरुच्चार्यन्ते तानि तथैव साधूनि भवन्ति । तथा साधुत्वमभ्युपेत्य चेतरैरप्यनुवृत्यानि भवन्तीत्यत्र पृषोदरादीनि यथोपदिष्टम् (६।३।१०९) इति सूत्रकारवचनमेव मानम् । यदि शिष्टाः शब्देषु प्रमाणं किमष्टाध्याय्या क्रियते । शिष्टपरिज्ञानार्थाष्टाध्यायीति भाष्यमपि सूत्राशयं स्फारं स्फारयच्छिष्टानां वाचि प्रामाण्यमङ्गीकुरुते । के पुनः शिष्टा इत्याकाङ्क्षायामित्याहु र्भगवन्तो भाष्यकाराः—आर्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या[1] अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्र भवन्तः शिष्टाः । वयं तु पश्यामः शिष्टाः खलु न केवलं पृषोदरप्रकारेष्वविहितलोपागमविकारेषु शब्देष्वेव प्रमाणमपि त्वन्यत्रापि वाङ्मयेऽविशेषेणेत्यत्र निरुक्ता यदि शिष्टाः शब्देष्वित्यादिर्भाष्यकृदुक्तिरेव ज्ञापिका । शास्त्रे तावत् तिङ्कृत्तद्धितसमासैरभिधानमुक्तमर्थानाम् । तद्यथा श्राद्धे शरदः (४।३।१२)

---

१. स्वकुटुम्बपोषणे षडहमात्रपर्याप्तधान्याः ।

तयोरेव कृत्यक्तखलर्थाः इति भावकर्मणोः कृत्याः सामान्येन नियम्यन्ते । ण्यत् च कृत्यः । न च इन्ते विहितेन ण्यता भाव्यः शक्यते ऽभिधातुम् । आत्य इत्युक्ते कर्मैव प्रतीयते ।



इति शास्त्रं शरच्छब्दाच्छ्राद्धेऽभिधेये ठञं विधत्ते । तेन शारदिकशब्दश्च निष्पद्यते । श्राद्धशब्देन चोभयमुच्यते श्रद्धावत्कर्म श्रद्धावान्पुरुषश्च । इह तु श्रद्धावान् पुरुषो न गृह्यते । तत्कस्मात् । अनभिधानात् । किमिदमनभिधानं नाम । शिष्टैरप्रयुक्तत्वम् । न हि शिष्टाः श्राद्धे पुरुषे विषये शारदिकशब्दं प्रयुञ्जते । महाभागास्ते सामान्येन विहितमपि ठञं तत्रार्थे नेच्छन्ति । तेन दीव्यति खनति जयति जितम् (४।४।२) । अत्र जितमित्यर्थे सामान्येन ठग्विहितः, देवदत्तेन जितमित्यत्र न भवति, अनभिधानात् । एवमङ्गुल्या खनतीत्यत्रापि न, अनभिधानादेव । तस्येदम् (४।३।१२०) इति सामान्येनाणादयो घादयश्च विधीयन्ते । अण्णुपगोरिदमौपगवम् । परं देवदत्तस्यानन्तरमित्यत्र न भवत्यण्, अनभिधानात् । समानकर्तृकेषु तुमुन् (३।३।१५८) इत्यनेनेच्छार्थेषु धातुषूपपदेषु धातुमात्रात्तुमुन्विहितः । इह कस्मान्न भवति इच्छन्करोति । अनभिधानादेव । सततशब्दाद् भावकर्मणोः ष्यञ् भवति, सन्ततात्तु नेति, कस्मात् । अनभिधानादेव ।/इत्यलं निदर्शनाय शिष्टप्रयोगाः प्रधानमुपसर्जनं व्याकरणमित्यस्यार्थस्य । अयमत्र सारः । शिष्टैः प्रयुक्तपूर्वा एव शब्दाः शास्त्रेण संक्षिप्यन्तेऽनुशिष्यन्तेऽन्वाख्यायन्ते वा । तस्माद् व्याकरणमन्वाख्यानस्मृतिरिति संविज्ञायते । तत्रापि नेदं युज्यते वक्तुं तावन्त एव शब्दाः सन्ति यावन्तश्शास्त्रेण परिगृहीता इति । अनन्वाख्याता अपि भूयः इति तेषां साधुत्वेऽपि शिष्टा एव मानम् ।

शिष्टा एव सर्वत्र वाग्व्यवहारे प्रमाणमिति यदुक्तमधस्तात्तत् सम्प्रति प्रसिषाधयिषामः । इदं तावद् व्यवस्थितं यां वाग्वर्तनीमनुवर्तन्ते शिष्टास्तामेवानुविवृत्सति लोकः । का नाम निरवद्या वाक्यप्रणीतिरिति शिष्टपद्धतेरेव शक्यमञ्जसा विज्ञातुम् । तत्र हि त एव प्रमाणं नेतरे । तन्मुखप्रेक्षी लोको यथाजातीयकं वाग्विन्यासं ते प्रयुञ्जते तथाजातीयकमेव स प्रमाणीकुरुते । यया विधया ते तं तमर्थं सन्दभन्ति तामेवानुकरोति लोकः । व्याकरणे च पदान्येव संक्षिप्यन्ते न वाक्यानि, तेन न तदायत्तो वाक्यसाधुत्वप्रत्ययः । वाक्यं च न केवलं साध्विष्यते साधीयश्च, साधिष्ठमपि चेष्यते । इदं च तारतम्यं शिष्टप्रयोगतोऽवसातव्यं भवति नान्यतः । अनलङ्कर्मीणं तत्र व्याकरणम् । नैतदेव । एवं नाम व्यवस्थितो वाग्व्यवहारो यत्तत्राहतो जनः शास्त्रमपि नाद्रियते । तदेतद्भगवन्तो भाष्यकारा इत्थङ्कारं निदर्शयन्ति— देवश्चेद् वृष्टो निष्पन्नाः शालयः । तत्र भवितव्यं सम्पत्स्यन्ते शालय इति । सिद्धमेतत् । कथम् । भविष्यत्प्रतिषेधात् । यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति । कश्चिदाह देवश्चेद्वृष्टः सम्पत्स्यन्ते

न स प्रमाणतामर्हो विवादजननो हि सः (भा० इनु० १६२।२५)।



शालय इति। स उच्यते मैवं वोचः, सम्पन्नाः शालय इत्येवं ब्रूहीति (३।३।१३३)।

व्यवहारप्राधान्यं चाचार्याचारादपि विज्ञायते। व्यवहारपारदृश्वा व्यवहारे च परमं समादृत आचार्यः स्वेन कृतामनुशिष्टिमपि नाद्रियते। तदर्हम् (५।१।११७) इति सूत्रे कृद्योगलक्षणां षष्ठीमनादृत्य व्यवहारानुगां तदिति द्वितीयां प्रयुङ्क्ते, न च चिन्तयते शास्त्रैकपक्षपातिनो मामधिक्षेप्स्यन्त्यन्यदयमुपदिशत्यन्यच्चाचरतीति। परं परं ह्यस्य व्यवहारे पारवश्यम्। तच्छीलनवासनावासितान्तःकरणस्तत्र भवान् कथङ्कारं तमतीयात्। द्वितीयाव्यवहारश्चार्हशब्दयोगे तथा प्रत्यष्ठाद्यथा वश्यवाचां प्राचां मुनीनां कृतिषु यत्र तत्रायत्नतः कृतो लभ्यते। इमांस्तु प्रदेशान् स्थूलोच्चयेन निर्दिशामः—न परित्यागमर्हेयं मत्सकाशादरिन्दमेति श्रीरामायणे (१।५३।१२)। पृथ्वीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरेति भारते (आदि० १९।१२)। इन्द्रत्वमर्हो राजाऽयं तपसेत्यनुचिन्त्य वै इति च तत्रैव (आदि० ६३।४)। वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसीति च तत्रैव (आदि० १५४।२६)। विद्ध्यौशनसि भद्रं ते न त्वामर्होऽस्मि भाविनीति च तत्रैव (आदि० ८१।१८)। अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तवेति च तत्रैव (आदि० ८५।३१)। अर्हस्त्वमसि धर्मज्ञ राजसूयं महाक्रतुम् इति च तत्रैव (सभा० १३।३२)। त्वमेव राजशार्दूल सम्राडर्हो महाक्रतुम् (सभा० ३३।२३) इति च। तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनञ्जय इति च तत्रैव (उद्योग० ७।१७)। सुधन्वन्न त्वमर्होऽसि मया सह समासनम् (३५।१५) इति च। अर्हस्त्वमसि कल्याणं वार्ष्णेयं शृणु यत्परम् इति च तत्रैव (शां० २१०।१३)। तदा विसर्गमर्हाः स्युरितीदं धातृशासनम् इति च तत्रैव (शां० २६७।१५)। लोकानर्हो यानहं तान्विधत्स्वेति तत्रैव (अनुशा० ७१।१७)। गात्रं हि ते लोहितचन्दनार्हं काषायसंश्लेषमनर्हमेतद् इति बुद्धचरिते (१०।२४)। न स प्रमाणतामर्हो विवादजननो हि स इति च (१६२।२५)। नैवार्हः पैतृकं रिक्थम् इति च मानवे धर्मशास्त्रे (९।१४४)।

अस्य व्यवहारस्य व्यभिचारोऽपि दृश्यत आश्चर्यमिव। तथा च मनौ (३।१५०) तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीदित्यत्र यथाप्राप्तं षष्ठ्याः प्रयोगः। अनर्हाः स्वव्यवस्य

शालामारमर्हसि भरतर्षभ (भा० शां० ८६।७)। अथ त्वमर्हसि ज्ञातुमस्य (भा० वन० २६४।३)। लोकानर्हो यान् ... (भा० अनु० ७१।१७)।

## वाक्ये क्रियापदपरिहारः

यद्यप्यन्वयवन्त्यर्थवन्ति च पदानि वाक्यं भवति तथापि तत्रैकेन तिङन्तेन भवितव्यमिति नियम्यते। तच्च तिङन्तं पदं न सर्वत्र श्रूयते, क्वचिद् गम्यते चापि। क्व चेदमनुक्तमपि गंस्यते। काऽस्य परिहारो न केवलं वाक्यदुष्टये न भविष्यत्युपस्कृतये चापीति शिष्टशैलीत एव शक्यमध्यवसातुम्।

(रा० ३।४२।३२)। इत्यत्रापि षष्ठी व्यवहारं व्यभिचरति।

अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति भाष्याच्छक्यतेऽनुमातुमस्तेर्लट्परकस्याप्रयोगोऽपि दोषावहो न भवतीति ।[1] कोऽसौ । का प्रवृत्तिः । एको देवः सर्वभूतेषु गूढः । असाधुदर्शी किलाऽसौ । अहो मधुरमासां दर्शनम् । अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोश्वा (तै० सं० ५।२।९) इत्यादिष्वप्रयोगोऽस्तेर्वाक्यस्य लाघवाय भवति माधुर्याय च । भाष्यवचने पुरुषग्रहणमतन्त्रम् । अन्यत्राप्यस्तेस्त्यागो न दोषाय कस्त्वं भो इत्यादिषु । परं त्यागः क्वाचित्कः प्रयोगस्तु प्रायिकः । परमस्तिरयं न शक्यो वाक्योपक्रमे परित्यक्तुम् । अस्ति पुण्यकृतामधिवासो वासवावास इव वसुधामवतीर्णः ···श्रीकण्ठो नाम जनपद इति श्रीहर्षचरिते । अन्यत्रापि धात्वन्तरस्याप्यप्रयोगमनुमन्यन्ते शिष्टाः । प्रविश, पिण्डीम् । इह भुङ्क्ष्वेति त्यक्तम् ।[2] तदन्तरेण तदर्थगतेः । इति शङ्करभगवत्पादाः, इति गुरुचरणा इत्यादिषु मतोपन्यासात्मकेषु वाक्येष्वाहुर्मन्यन्ते पश्यन्ति प्रतिजानत इत्यादि तिङन्तं गम्यमानमपि वाक्यालङ्कृतये भवति । जुषन्ते हि शिष्टास्तत्प्रकारमास्वादन्ते च रसज्ञा दोषज्ञाः । यत्रापि क्वचिद्योग्यक्रियाध्याहारो न दुष्करः, किन्तर्हि निगदसमकालं तत्तत्क्रियापदं बुद्धिमुपारोहति तत्रापि परिहरन्ति तत् प्रयोगचणाः । तद्यथा—यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्येन सर्वस्य कटुरेव सः ॥ अत्र च्छिनत्त्यादयः क्रिया अश्रुता अपि स्फुटावगमाः । एवम्—मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा । वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥ इत्यत्रापि धाक्षीदित्यादयोऽनुक्ता अपि क्रियाः स्फुटमवभासन्त इति निरवद्यं वचः । अस्त्येवञ्जातीयके विषये आदिकविना कृतः क्रियापदस्य परिहारः, स दृश्यताम्—शृणु मैथिलि मद्वाक्यं मासान्द्वादश भामिनि । (रा० ३।५६।२४) इति । अत्र प्रतीक्षिष्य इति शेषः सहसैवोपतिष्ठते न च यत्नं प्रतीक्षते । यश्चैवंकथने विच्छित्तिविशेषस्तस्य सहृदया अभिज्ञा इति नार्थो वाग्विग्लापनेन । संभ्रमे वाक्यकारो द्विरुक्तिं पदस्य विधत्ते । रक्ष रक्ष व्याघ्रो मामाघ्रातुमिच्छति । परं संभ्रमे तिङन्तपदपरिहारोऽपि दृश्यते । आपस्तावत् । इमा आपः । आसनं तावत् । इदमासनम् । इदमत्र तत्त्वं बोध्यम् । क्रियोच्चारो हि विलम्बयत्यर्थप्रतीतिं निर्दिश्यमानार्थप्रतिपत्तिं[3] च । इष्यते चाकालहीनं प्रवृत्तिः । सा च लघुनैव न्यासेन

---

१. इदमत्र बीजं बोध्यम्—सर्वपदार्थेषु चास्ति वाक्यशक्तिः । वृक्ष इत्युक्तेऽस्तीति गम्यते । न सत्तां पदार्थो व्यभिचरतीति (योगभाष्ये ३।१७) ।

२. पिण्डीमिति कर्मणा योग्यक्रियाक्षेपात् प्रकरणवशाद् भुजिक्रियायाः प्रतीतेः सा नोक्ता । प्रविशेति क्रियापेक्षं कर्म गृहं नोक्तम् । उभयत्र वाक्यार्थे वाक्यैकदेशप्रयोगः ।

३. अनुष्ठानम् ।

तस्मादनिश्चिद् वर्षेति न भावेत् (तै०सं० ५।४।८।४४)।
नात्यर्थन्ति समेतपत्र (ऐ०ब्रा० ४।२७)।



शक्या न गुरुणेति सुग्रहं सुधीभिः। आपस्तावदाह्रियन्तामित्यधिककालोच्चार्यं वाक्यं समाहितस्येष्टं स्यान्न संभ्रान्तस्य। एवमपि निरनुक्रोशस्य पुत्रौ, मा त्वापलम् इति कुन्दमालायां सीतावचने, मा विमर्शो वसुमती भरताय प्रदीयताम् इति श्रीरामायणे (२।३४।४४)ऽप्युक्तहेतुकृत एव क्रियापदपरिहारः। भारतेऽपि तद्धेतुकः स दृश्यते—त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् (उद्योग० ९४।४४)। अत्रासनानि त्वर्यमाणानीच्छन् क्रियापदं परिहरति कुशलः प्रयोक्ता। क्वचिद् बलवदुक्तिकत्वाभिप्रायेण क्रियामभ्यावर्तयन्ति शिष्टा वाक्यभेदं च प्रयोजयन्तीति प्रसङ्गादुच्यते। तद्यथा भारते—अस्मान्वेत्थ परान्वेत्थ वेत्थार्थान् वेत्थ भाषितुम् (उद्योग० ७२।९२)।

क्वाचित्कः क्रियापदपरिहारो दर्शितः। कर्तृकर्मणोरपि परिहारः क्वाचित्को व्यवहारमनुपततीति प्रसक्तानुप्रसक्तं प्रदर्श्यते—यद्यस्तमिते व्रतमुपेयात् (आप० श्रौ० ४।१।३।५)। अत्र सूर्य इति नोक्तम्। अनुक्तौ सूत्रशैली कारणमिति मा स्म भ्रमीः। अन्यत्रापि कर्तृपदपरिहारो दृश्यते—विद्योतमाने स्तनयत्यथो वर्षति (गो० ब्रा० पूर्व० ३।१९)। अत्र मेघ इति कर्तृपदं परिहृतम्। तदिदं बहुलं ब्राह्मणेषु। यत्र चापश्यत स वै तिरो वर्षाणि वर्षतीत्यत्र भारते (विराट० ५।३०)ऽपि मेघ इति कर्तृपदं पर्यहारि। श्रुत्वैव च स राजानं दर्शयामास भार्गवः (भा० आदि० ८१।१९)। अत्रात्मानम् इति पदस्य परीहार इत्थम्भूतो व्यवहार इति दर्शयति। समुल्लिखद्भिरेतैर्हि त्वया श्रृङ्गशतैर्नृपः। क्वचिद् दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्वा नलो नृपः (भा० वन० ६४।५३)। अत्र त्वामिति कर्म नोक्तं, प्रसिद्धेः।

## वाक्ये पदक्रमः

इत्थम्भूते वाक्ये कीदृशः पदानां क्रम इत्यधिकृत्य किञ्चिद् ब्रूमः। पात्रमाहर, आहर पात्रमित्येवं वाक्ये पदानां यथेष्टमभिसम्बन्धः क्रियते। तेनान्यत्रापि नियतः पदानां क्रमः कश्चिन्नास्तीत्युक्तं भवति। रामः सीतां परिणिनाय। सीतां रामः परिणिनाय। परिणिनाय रामः सीताम्। सीतां परिणिनाय राम इति रामकर्तृकः सीताकर्मको भूतानद्यतनपरोक्षवृत्तिः परिणय इत्यर्थो येन केनापि पदक्रमेण शक्यो वक्तुम्। अत्र वक्तॄणां कामचारः। परमिदं प्रायिकम्। क्वचिन्नियतापि पदानुपूर्वी क्वाचिदस्तीति नापलापमर्हति। तद्यथा—उपाख्यानोपक्रमः प्रायेणास्तिना क्रियते। अस्त्ययोध्यायां चूडामणिर्नाम क्षत्रिय इत्यादिः। अद्य सप्तवासरास्तस्येतो गतस्य। अद्य दशमो मासस्तातस्योपरतस्य (मुद्रा० ४)। व्यतीतः समयः (संवत्सरः) सम्यग्वसतां वै पुरोत्तमे। कुर्वतां तस्य कर्माणि विराटस्य महीपतेः॥ (विराट०

वर्षे वृष्टिर्भवति वर्षे वत्सरश्च भवतीति विदितम्। वर्षे पर्जन्योऽपि भवतीति च वेद्यम्। तथा च प्रयोगे
प्रयोगः — मा ते वर्षस्य वर्ष्मतो वर्षन्तु पृथिवीमनु
(अथर्व० ४।१५।४)।



३१।२)। अत्राद्यशब्दविनाभावेऽपि निरुक्तस्य पदक्रमस्यानुसारः प्रव्यक्तः। अन्यत्रापि भारतेऽयमेव क्रमोऽनुसृतो भवति। अष्टादश दिनान्यद्य युद्धस्यास्य जनार्दन। वर्तमानस्य⋯॥ (शल्य० २४।१७)। चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै॥ (शल्य० ३४।६)। अत्र पद्यरचनावशादद्यशब्दस्य वाक्यादौ न्यासो न। एतद्वाक्यगतोऽपि पदक्रमो नियतप्राय इत्यवश्यमुररीकरणीयम्। अयमेव च क्रमोऽपरपञ्चालेपु (पञ्चापदेशे) लोकभाषायामित्यस्य न्याय्यत्वे दृढं लिङ्गम्। अत्र हि संस्कृतं सर्वप्रथमं चिरतरं च प्रचचार। अत्रैव पाणिन्यादयो मुनयो जनिं लेभिरे। इदमेव च सारस्वतं धाम पूर्वे प्रपेदिरे वाच्यभिविनयस्य कामुकाः। तथा च कौषीतकिन आमनन्ति—तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यते। उदञ्च उ एव यन्ति वाचं शिक्षितुं यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति (कौ० ७।६)। तस्मादिहत्या वाक्छैली प्रकृतं क्रमं चेदुपोद्वलयति नूनं बद्धभूमिरयं भवति।

यद्यपि 'यस्य येनास्ति सम्बन्धो दूरस्थेनापि तस्य सः', इति व्यवहितविप्रकृष्टेऽपि सोऽवगम्यते, तथापि नेह निरवग्रहं प्रभवन्ति वक्तारो वक्तुम्। लोको हि वारयति। इच्छति च क्रमं कश्चित्। अत एवाक्रमताऽस्थानस्थपदता संकीर्णता चेति दोषत्रितयं वाक्यगतं निर्दिशन्त्यालङ्कारिकाः। अक्रमता यथा—कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी (कुमार०)। अत्र त्वमित्यस्यानन्तरं चकारो युक्तः। अस्थानस्थपदता यथा—हितान्न यः संशृणुते स किंप्रभुः (किरात०)। अत्र संशृणुत इत्यतः पूर्वं नञः स्थितिरुचिता। संकीर्णता यथा—चन्द्रं मुञ्च कुरङ्गाक्षि मानं पश्य नभोऽङ्गने। अत्र नभोऽङ्गने चन्द्रं पश्य मानं मुञ्चेति क्रमो युक्तः।

वाक्ये षष्ठ्यन्तं विशेषणं विशेषणान्तरेणाव्यवहितं विशेष्यात्पूर्वं प्रयुज्यत इति शिष्टव्यवहारः। सर्वगुणसम्पन्नस्तस्य सुतः कस्य स्पृहां न जनयति। एकातपत्रं जगतः प्रभुत्वमिति कालिदासश्च। न ह्यत्र जगत एकातपत्रं प्रभुत्वमित्येवं क्रमः शक्यो विपर्यासयितुम्। न ब्रूमो वृत्तभङ्गभयादिति। किन्तर्हि व्यवहारातिक्रमादिति। एवं हि व्युत्क्रमेणोच्यमाने व्यवहारोऽतिक्रान्तो भवतीति। एवं सर्वैर्योषितां गुणैरलंकृतेत्यनुक्त्वा योषितां सर्वैर्गुणैरलंकृतेति न युज्यते वक्तुम्। किं च भवति यद्युच्येत। वैरस्यमुद्वेगो वा। स नेष्यते। अयमेवेष्टः पदक्रम इत्यत्र समासक्रमोऽपि ज्ञापकः। स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने इति नानार्थवर्गेऽमरः। तत्र वणिजो धनं वणिग्धनमिति पूर्वं षष्ठीसमासः। ततः किंलक्षणं तदित्याकाङ्क्षायां मूलं च तद्वणिग्धनं चेति मूलवणिग्धनमिति विशेषणसमासः। अन्यत्रापि स एव 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इति पठति। तत्रापि पूर्वम्

इभस्य बन्धनमिभबन्धनमिति षष्ठीसमासः, ततस्तन्मध्यशब्देन विशिष्यते। एवं मालविकाग्निमित्रे सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्येति प्रयोगेऽपि पूर्वमन्तःपुरवनितानां व्यापार इति षष्ठीसमासः, ततः सर्वशब्देन कर्मधारयः। रघुकाव्येऽपि प्रौढप्रियानयनविभ्रमचेष्टितानीति समासोऽप्येवंक्रमस्याभिव्यञ्जकः।

बहुव्रीहौ समासेऽपि पदानां क्रमो वाक्यगतस्य क्रमविशेषस्य समर्थकः। वृतः श्रिया भास्वरसर्वदेहः (रा० ३।७३।४६) इत्यत्र, तां दृष्ट्वा चारुसर्वाङ्गीम् (रा० ६।८१।१७) इत्यत्र च सर्वशब्दस्य विशेष्यादव्यवहितपूर्वं निपातः, ततो विशेषणान्तरस्य भास्वरस्य चारुणश्च। सर्वोपसर्जनो बहुव्रीहिरिति यस्य कस्यैकतरस्य पूर्वनिपातो न्याय्यो भाति, न चैवं भवति। लोको नानुजानाति। वाक्येनाभिधाने प्राप्त एव समास आरभ्यत इति वाक्यगतः पदक्रम एव समास आश्रीयते, तस्यैव न्याय्यत्वात्। तेन वाक्येऽपि भास्वरः सर्वो देहोऽस्येति क्रमः। चारूणि सर्वाण्यङ्गान्यस्या इति च। तस्माद्वाक्ये सर्वादिभिः सर्वनामभिर्विशेष्यादव्यवहितपूर्वं निपतितव्यं विशेषणान्तरैश्च गुणवचनैस्ततो व्यवहितैरिति क्रमनैयत्यं भाति। एवं परमः स्वो धर्मोऽस्येति परमस्वधर्म इति समासान्तेषु दीक्षितवचोऽपि वाक्येऽमुमेव क्रममनुमापयतीति दिक्।

पूर्ववाक्यगतेन यच्छब्देन सम्बध्यमान उत्तरवाक्यगतस्तच्छब्दस्तु प्रथमं प्रयुज्यते नाम, ततश्च समानाधिकरणं विशेषणान्तरम्, तद्यथा—प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं तत्सम्बन्धिमात्रं च विवक्षितं यदपरं लिङ्गसंख्याप्रत्यक्षपरोक्षादिकं तत्सर्वमविवक्षितम् इति तस्येदम् इति सूत्रे काशिका। एवं च युजविद (३।२।६१ सूत्रे) इत्यकारान्तस्योपादानाद्गणे येऽकारान्ता विदधातवो विद ज्ञाने विद विचारणे विद सत्तायामिति ते सर्वे गृह्यन्त इति लुग्विकरणपरिभाषाव्याख्यायां सीरदेवः।

अव्ययेषु तुपुनःखल्वादयो वाक्यादौ निषिद्धाः। तं तु देशं न पश्यामि यत्र भ्राता सहोदर (रा०) इति साध्वी पदानुपूर्वी। ये पुनरधर्मेणैधते जनो न धर्मेणेति मते स्थितास्ते भ्रान्ताः। न खलु न खलु बाणः संनिपात्योऽयमस्मिन्। विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम। जघान कंसं किल वासुदेवः। अर्हति किल कितव उपद्रवम्। इमानि वाक्यानि त्वादयो नारभन्त इति साधूनि भवन्ति। अत्र 'न पादादौ खल्वादयः' इति काव्यालङ्कारसूत्रमप्यनुकूलम्। न भवति गुणानुरागः खलानां केवलं प्रसिद्धिशरणानाम्। किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे॥ इत्यत्रार्यायां किलेति पदमादौ प्रयुक्तम्। तच्चिन्त्यम्। जातुशब्दोऽपि वाक्यादौ न प्रयुज्यते प्रायेण—न जातु कामः कामानामुपभोगेन शाम्यति (मनु०)। क्वचित्त्वादावपि शक्यमिदं प्रयोक्तुमित्यत्र न जात्वपूर्वम्



शिशु० वधम् (१९।६०) इत्यत्र पादादौ किल शब्दः।

( ८।१।४७ )। इति पाणिनीयं सूत्रं लिङ्गम्। चेच्छब्दश्च न वाक्यादौ प्रयुज्यते। इति चेत्कृष्णं नंस्यसि स्वर्गं यास्यसीति न शक्यं वक्तुम्। इदं चात्रापरमवधेयम्—चेच्छब्दप्रयोग उत्तरवाक्ये तदा तर्हीत्यादि पदं न दीयते। कृष्णं चेन्नंस्यसि तदा ( तर्हि ) स्वर्गं यास्यसीत्येवं वक्तारो व्यवहारमतियन्ति। अथ चेदिति निपातद्वयं चेदर्थे वाक्यादौ कामं प्रयुज्यते—अथ चेत्त्वरते कर्तुं दिवसं मारुताशनः। इति वसिष्ठः। हिशब्दमपि वाक्योपक्रमे नेच्छन्ति वाग्विदः सूरयः। यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ( मनु० ) इत्यत्रेवान्यत्रापि पदात्परस्यैव हि-शब्दस्य योगोऽभ्यनुज्ञायते।

## लिङ्गसंख्ये

उक्तः पदक्रमः। लिङ्गसंख्ये सम्प्रत्युच्येते। इदं तावदभ्युपेयं दुर्ग्रहो लिङ्गभेदः। अन्तर्वाणयोऽप्यत्र मुह्यन्ति। वैयाकरणाः खलु प्रत्ययतो लिङ्गमुन्नयन्ति प्रायेण। न च सर्वत्र प्रत्ययाश्रय एव लिङ्गावसायो लोकाश्रयश्चापि। नदी कुमारी स्त्री गौरी मतिरीहा ब्रह्मबन्धूरित्यादिषु प्रत्ययतो लिङ्गोन्नयः। अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीषु तु लोकतः। कश्चिच्छब्द एकार्थक एव नानालिङ्गको दृष्टः। तटस्तटी तटम्। कश्चिदर्थभेदे लिङ्गभेदमुपगच्छति। यथा—काननवाच्यरण्यशब्दो नपुंसकम्, महत्त्वविशिष्टः स एव स्त्रियां भाष्यतेऽरण्यानीति। सरस्वच्छब्दः पुंसि समुद्रमाह, स्त्रियां तु नदीविशेषं सरस्वतीम्। गोष्ठमिति गवां स्थानमाह, गोष्ठीति च संसदम्। गन्धवहः पुमान् वायुमाचष्टे, गन्धवहा स्त्री तु नासिकाम्। दुरोदर इति कितवं वक्ति, दुरोदरमिति च द्यूतम्। सर इति कासार इत्युच्यते, सरसीति च दाक्षिणात्येषु महत्सरः। जलाशयो जलाधारो भवति, जलाशयं तूशीरम्। कुटशब्दो घटे पुँल्लिङ्गो गेहे तु स्त्रीलिङ्गः, कुटीति। द्रोणशब्दः परिमाणविशेषे पुल्लिङ्गः। गवादन्यां तु स्त्रीलिङ्गः द्रोणीति। तरणिर्द्युमणौ वर्तमानः पुमान् भवति, कुमार्यां नौकायां च स्त्री[1]। कुशो दर्भो भवति, कुशं जलम्, कुशा वल्गा, कुशी च फालः।[2] शिवः कीलो भवति। शिवा तु क्रोष्टाऽऽमलकी च।[3] पिशुनं कुङ्कुमं भवति, पिशुनस्तु सूचकः, पिशुना तु सूचिका नारीत्यलं विस्तरेण।

आतश्च लोकाश्रयो लिङ्गावसायः। स्थूणेति टाबन्तं स्त्रीलिङ्गम्, गृहस्थूणमिति च नपुंसकम्।[4] जलेनार्द्रमिति जलार्द्रा व्यजनविशेषः। ऊर्णेति स्त्रियां

---

१. 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्' इति औणादिकपदार्णवे (२।३७३)।

२. कुशी फाले कुशो दर्भे कुशा वल्गा कुशं जले—इति हैमः।

३. शिवः कीलः शिवा क्रोष्टा भवेदामलकी शिवेति शाश्वतः।

४. स्थूणोर्णे नपुंसके च। गृहशशाभ्यां क्लीबे। इति पा० लिङ्गा०।

नियतम्, शशोर्णमिति च क्लीबे। इह परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति शासनमतिक्रम्यते लोकश्च प्रमाणीक्रियते।

क्वचित्तु समानार्थत्वेऽपि प्रत्ययमात्रकृतो लिङ्गभेदो दृश्यते यदुच्यते स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपीति। तद्यथा—सन्निधिः पुमान्, सान्निध्यं नपुंसकमिति ष्यञ्कृतो भेदः। रक्षो नपुंसकम्, राक्षसः पुमान्। गायत्री स्त्री भवति, गायत्रं नपुंसकम्। अनुष्टुप् स्त्री भवति, आनुष्टुभं नपुंसकम् इत्यण्कृतः। स्मृतयः प्रमाणं वेदाश्च प्रमाणतरा इति तरप्प्रत्ययकृतः। कुतूः स्त्री, कुतुपश्च पुमान् इति डुपच्प्रत्ययकृतः। तस्मात्पुरस्तादन्ये होत्रकाः सदः प्रसर्पन्ति पश्चाच्छावाक इत्यत्रैतरेयब्राह्मणे (१०।४)। ऋत्विक्पर्यायो होत्राशब्दो नित्यं स्त्री, तासां वै होत्राणामायतीनामाजयन्तीनामच्छावाकीयाऽहीयत इति तत्रैव (१०।४), स्वार्थे कन्प्रत्ययान्तो होत्रकस्तु पुमान्। कन्प्रत्ययकृतो लिङ्गभेदः।

अन्यत्र च समानेऽपि प्रत्ययेऽर्थभेदाल्लिङ्गभेदः। तद्यथा—तयप्प्रत्ययान्तं धर्मवृत्ति स्त्रीनपुंसकयोः। वर्णानां चतुष्टयी, वर्णानां चतुष्टयम्। वेदानां त्रयी, वेदानां त्रयम्। धर्मिवृत्ति तु वाच्यलिङ्गकम्—त्रय्यः स्थितयः। त्रये लोकाः। त्रयाणि जगन्ति। धामानि त्रयाणि भवन्ति। स्थानानि नामानि जन्मानीति। (निरुक्ते ९।२८)। चतुष्टये ब्राह्मणानां निकेताः (काशिकायां ८।३।१०१)।

धातुनिर्देशे याविक्श्तिपौ तदन्तं पुंसि—अयं वृधिः। अयं पचतिः। अव्ययं नपुंसकं भवत्यव्ययीभावश्च। शोभनं श्वः। इदं तिष्ठद्गु कालः। स्वरपि मे न मनोहरमुल्लसत्पृषतलोचनया रहितं त्वया। (अमरोद्घाटने स्वामी)। अत्र मनोहरमिति च रहितमिति च विशेष्यनिघ्नतया नपुंसकम्।

इदं चात्र शब्दस्वाभाव्यमालोच्यताम्। प्रतिहारीति स्त्रीलिङ्गो द्वारपालं द्वारपालिकां चाप्याह। प्रमाणयन्ति चैतदभिधानकृतः—द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तर इति। अयं पुंव्यक्तावपि स्त्रियामिति टीकाकारो महेश्वरः।

एवं वन्दिशब्दो बन्दीशब्दो वा पुंव्यक्तावपि बद्धेऽर्थे स्त्रियामेव नियतः। तथा विष्टिरपि कर्मकरे रूढः स्त्रियामेव प्रयुज्यते। तथा पुंसोऽप्युद्दिश्य भण्यते—इमा विष्टय इति। शिवेति शृगालं शृगालीं चापि समं ब्रूते। आह च स्वामी—अयं शृगालेऽपि स्त्रीलिङ्गः। सायणोऽपि शिवा ते पापनाशिका (          ) इत्यत्र क्रोष्टुनामैतत् नियतस्त्रीलिङ्गम् इत्याह। होत्रेति स्त्रियां नियतमेव ऋत्विगर्थे वर्तते। अमित्रशब्दः शत्रुपर्यायः स्त्रीपुंसयोर्नियतः। अमित्रा मित्ररूपेयं पाणिगृहीती ममेति श्रीरामायणे। हा नृशंसे ममामित्रे कैकेयि कुलपांसनि (रा० २।६४।७६)। मातृरूपे ममामित्रे नृशंसे राज्यकामुके (रा० २।७४।७) इति च। तामेव तु ममामित्रां चिन्तयन् परितप्यसे इति च भारते (आ० २३३।११)।

स्वानीति वदन् मल्लिरपि चिन्त्यः।
येन देवाः पवित्रेणात्मानं पुनते सदा (साम० ११।
जटाः कृत्वाऽऽत्मनः सर्वे वल्कलाजिनवाससः (भा०, आदि० १४६।३)।
वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः। आत्मानमात्मना सत्यः
(भा० वन० ७०।८)।
पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे (शा० ७)।



संख्यामधिकृत्य न बहु वक्तव्यमस्ति। एकत्वादीनां वाचिका विभक्तयो यथाविषयं प्रवर्तन्ते। परं क्वचिदेकत्वेऽपि बहुवचनं श्रूयते। कथं महाराजदशरथस्य धर्मदारा इयं कौसल्या। कष्टमभिज्ञायते सैवेयमिति। अत्र पत्न्याः कौसल्याया एकत्वेऽपि दारशब्दो बहुत्वे पुंसि प्रयुक्तः। क्वचिदात्मनि बहुमानेनापि बहुवचनं प्रयुज्यते यथोक्तं षड्गुरुशिष्येण वेदार्थदीपिकायाम्—

व्याख्येयार्थबहुत्वेन बहुमानेन चात्मनः।
व्याख्यात्रात्मन्यथारोप्य बहुत्वं तु प्रयुज्यते॥
यथाहि निधिमाशाद्य प्रयुञ्जानस्तु दृश्यते।
एते वयं समृद्धार्था देवोऽस्मासु प्रसीदति॥ इति।

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः (वैराग्य०, श्लो० ५३) इति राजानं प्रति यतेरुक्तिर्बहुमानगर्भितेति युज्यते बहुवचनम्। परमन्तरेणापि बहुमानमेकस्मिन्वक्तरि बहुवचनं व्यवहारानुगं भवति। इह पुष्यमित्रं याजयाम इति वर्तमाने लडिति सूत्रे भाष्यकारस्यात्मानं प्रत्युक्तिः। तन्नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं मह इति मल्लिनाथः। इदं च चारुतरमुदाहरणं भाष्यस्थम्—यथा यो यत्राप्रधानं भवति स आह—गुणभूता वयमत्रेति (प्राक्क्रीताच्छः ५।१।१)। अस्मदो द्वयोश्चेति शास्त्रमप्यत्रार्थे प्रमाणम्। तेन ग्रामे नः कृत्यमिति साधयामो वयमिति प्राकृतोऽप्यर्हति वक्तुम्। सविशेषणत्वे त्वेकवचनमेव यथाप्राप्तं भवति। देवदत्तोऽहं ब्रवीमि। आत्मशब्दप्रयोगोऽप्येकत्व एव दृश्यते बहुत्वेऽपि व्यक्तीनाम्। तद्यथा भारते प्रयोगः—मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् (प्रजागरपर्वणि ३४।४५)। बहुधा च प्रयुञ्ज्महेऽज्ञा आत्मानं कृतिनं मन्यन्त इति। एक आत्मेति पक्ष एकवचनमुपपन्नमेव। नानात्मान इति नैयायिकादीनां पक्षेऽप्येकवचनं नायुक्तम्। प्रत्येकं वाक्यपरिसमाप्तेः। अज्ञाः प्रत्येकमात्मानं कृतिनं मन्यन्त इत्यर्थात्। यदिहात्मशब्दविषय उक्तं तदात्मवाचिनि स्वशब्देऽप्यवितथम्। एवं लपन्तोऽज्ञाः स्वस्य जाड्यमुदाहरन्ति। अत्र स्वेषामिति वदन् बाढं भवत्यपशब्दभाक्।

द्वयोर्द्वयोरर्थयोर्वाचकाः स्तनादयो बहुभिरभिसम्बध्यमाना अपि द्वित्वं न जहति प्रायेण। तदुक्तं वामनेन—स्तनादीनां द्वित्वाविष्टा जातिः प्रायेणेति। तद्यथा—इह स्थितानां नः श्रोत्रयोर्मूर्छति तूर्यनादः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः। श्रान्ता वयम्। नाग्रतो नश्चरणौ प्रसरतः। ये बाहुभ्यां नदीं तरन्ति ते बाहुका इत्युच्यन्ते। परं नायं नियमः। इदं प्रायिकमिति वामनेनैव शब्दत उक्तम्। तेन 'शूरबाहुषु लोकोऽयं लम्बते पुत्रवत्सदेति' भारते (शां० ९८।१७) बहुवचनं संगच्छते। तत्र शूराणां बाहवस्तेष्विति विग्रहः।



मे = मया।

नहि स्वः स्वं हिनस्ति (तै० सं० २।१।८।३४)। अत्रात्मार्थे प्रथमायां पुंस्येकवचने प्रयोगः। एतेनाप्रथमाया आत्मार्थस्य स्वशब्दस्य प्रयोग इति वदन् मोनियर् परास्तः।



एवमन्यत्रापि—पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः (रा० २।४३।१७)। तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया। निमित्तवेधी स मुनिरिषीकाभिः समार्पयत् (भा० उद्योग० ९६।३१-३२)॥ यत्तु आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुश्श्रोत्रमथो बलमित्युपनिषद्येकवचनं तदिन्द्रियाभिप्रायेण। इन्द्रियं नामैकं भवति, गोलके तु द्वे, अतश्चक्षुषी श्रोत्रे इति द्विवचनम्। यच्च कुमारे (३।६७) उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानीति बहुवचनं तद् बहुत्वापेक्षम्। त्रिलोचनस्य भगवतः शिवस्य तानीति।

केचिच्छब्दाः पुम्भूम्नि नियताः। अथ ब्रह्मचर्यं परिसमाप्य दारान्कुर्वीत। पत्नीपरिग्रहं कुर्यादित्यर्थः। कथं दशरथस्य धर्मदारा इयं कौसल्येति उत्तरे रामचरिते।[1] अक्षतास्तिलकक्रियायां प्रशस्ताः। वरवध्वौ लाजैरवकिरन्ति कन्याः। परे स्त्रियां बहुत्वे प्रयुज्यन्ते। उक्तं चामरेण—आपः सुमनसो वर्षा अप्सरःसिकतासमाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम्॥ इति उत्तरत्रयस्यैकत्व उदाहरणानि—उर्वशी नामाप्सराः पुरूरवसं चकमे। प्राप्ते तु षोडशे वर्षे गर्दभी चाप्सरा भवेदिति च। एका च सिकता तैलदानेऽसमर्था खार्यप्यसमर्था इति भाष्ये। समां समां विजायते (५।२।१२) इति भगवान् सूत्रकारः। सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् (ऋक्० ४।५७।७)। न स जीवति तां समाम् इति च चरके (इन्द्रियस्थाने २।१६)। सुमनःशब्दो मालतीवचनस्त्वेकत्वे प्रयुज्यतेऽनवग्रहम्। आह च सुमना मालती जातिः। कुसुमवचनत्वेऽपि बहुत्वं व्यभिचरन्दृष्टः। वेश्या श्मशानसुमना इव वर्जनीयेति मृच्छकटिकायाम्। अग्रासातां सुमनसाविति च (२।४।७८) काशिकायाम्। वर्षाशब्दस्तु नित्यं बहुत्वे।[2] जलौकेत्याकारान्तं त्रिषु वचनेषु यथापेक्षं प्रयुज्यते। जलौक इति सकारान्तं तु बहुवचने नियतम्। पांसु शब्दः प्रायेण बहुवचनान्तः। पांसवः कस्मात्। पादैः सूयन्ते। पन्नाः शेरत इति निरुक्ते (३।१२।१९) निर्वचनदर्शनात्। व्याख्येयगतो बहुत्वे प्रयुक्त इति तस्यायमनुवाद इति मा स्म भ्रमीः। समूढमस्य पांसुरे (ऋ०१।२२।१७) इति हि तत्र मूलम्। सक्तुरपि तादृशः। अत्र करम्भो दधिसक्तव इत्यमरोक्तिः प्रमाणम्। धानाचूर्णं सक्तवः स्युरिति क्षीरोद्धृतं कोषान्तरं च।

---

१. सूत्रग्रन्थेषूपनिषत्सु च क्वचिद् दारशब्दः पुंस्येकवचने प्रयुक्तो दृश्यते—तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत् (बृहदा० ६।४।१२)। सोऽयं गतिविरलश्छान्दसः प्रयोगो लोके नानुपात्यः।

२. वर्षाशब्दस्य बहुत्व एव प्रयोग इत्यत्र वर्षाभ्यष्ठक् (४।३।१८) इति सूत्रकारवचोऽपि मानम्।

भारतेऽपि पुम्भूम्नि प्रयोगो दृश्यते—यवप्रस्थं तु तं सक्तूनकुर्वन्त (=अकुर्वत) तपस्विनः (आश्व० ९०।३३)। धानाशब्दोऽपि प्रायेण स्त्रियां बहुत्वे। तथा चामरः पठति—धाना भृष्टयवे स्त्रिय इति। वासोदशाऽऽविश्चापि स्त्रियां बहुत्वे प्रयुज्येते। आविरिति प्रसववेदनोच्यते। यथा च चरके (शारीर० ८।३६।।) प्रयोगः–ततोऽनन्तरमावीनां प्रादुर्भाव इति। वस्तिशब्दोऽपि दशावचनः स्त्रीपुंसयोर्बहुत्वे नियम्यते।

क्वचित्कर्तृकर्मणोर्बहुत्वेऽप्येकवचनान्तमाख्यातपदं प्रयुञ्जते व्यवहारकोविदाः। तद्यथा—चरः शरीरावयवाः स्वभावो धातवः क्रिया। लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन्परीक्ष्यते॥ (चरके सूत्र० २७।३३१)। उभयत्र दशाहानि कुलस्यान्नं न भुज्यते। दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते॥ (मनौ ५।६१ इत्यस्यानन्तरं क्षेपकः)। तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च निवर्तते इति काशिकायाम् (४।२।६६)। तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति मनौ (११।९३)। आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥ इति। तस्य राज्यं च कीर्तिश्च प्रतापश्चापि वर्धत इति श्रीरामायणे (४।२९।११)। यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशित इति च (६।१०४।५)। अभ्याजेत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणी गुणश्चानिर्दिष्ट इति भाष्ये (१।२।२)। रसश्च विपाकवीर्याणि प्रभावश्चाप्युदाहृत इति चरके (सूत्र० २६।६६।।)। तयैव देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यात इति चोत्तरे रामचरिते। अत्रोदाहरणेषु नपुंसकमनपुंसकेनेति शासनातिक्रमोऽपि न दोषाय। व्यवहारेणाभ्यनुज्ञानात्। अत्र वाक्येष्वन्त्येनैव चकारसमुच्चितेन पदेन क्रियान्वयः, अन्यत्र क्रियाऽध्याहार्येति समाधिमाहुः।

## धातोः सकर्मकत्वाऽकर्मकत्वे

गतं लिङ्गसंख्याभ्याम्। धात्वधिकरणकं किञ्चिद् ब्रूमः। धातूनां सकर्मकाकर्मकत्वं तावन्न सुकरं प्रतिपत्तुम्। अयथाप्रतिपन्ने च तस्मिन्दुष्यति सर्वोऽपि वाक्यविन्यास इति तदिह किञ्चिद्विशदयामः। शल हुल पत्लृ गताविति धातुपाठः। पततिरयं गमेरर्थे प्रयुज्यते। अधोगमनाद्यर्थावगमनं तु प्रकरणात्। तथा च शिष्टप्रयोगाः—

उदपप्तदसौ सूर्यः पुरु विश्वानि जूर्वन् (ऋ० १।१९१।९)। नेज्जिह्मायन्त्यो नरकं पतामेति खिलपाठः (ऋ० १०।१०६ सूक्तस्यानन्तरम्)। यथा महान्तमध्वानमाशया पुरुषः पतन्। स निराशो निवर्तेत कर्मैतन्नस्तथो-

प्रद्यान्तरिक्षे पत्रिभिः पतन्तम् (ऋ० १०।८७।६)।



पमम् ॥ इति भारते (शां० १०।११)। दिशः पपात पत्त्रेण वेगनिष्कम्पकेतुना (रघौ १५।८४)। पपात पूर्वां जहतो विजिह्मतां……प्रसक्तसंपातपृथक्कृतान् पथ इति च किराते (४।१८)। आश्वीनानि शतं पतित्वेति च काशिकायाम् (५।२।१९)। नभः पतन्त्यात्मसमं पतत्त्रिणः। यथा गमिः सकर्मकस्तथा पततिरपि। तथैव चोदाहृतम्। ऊर्ध्वगमने तु प्रायेणाकर्मकः। पक्षिणः खे पतन्ति। वेदा यो वीनां पदमन्तरिक्षेण पतताम् (ऋ० १।२५।७॥)। अपि शक्या गतिर्ज्ञातुं पततां खे पतत्त्रिणाम् इति कौटलीयेऽर्थशास्त्रे (२।३०)। अधोगमनेऽर्थेऽपि प्रायेण तथा। क्षते प्रहारा निपतन्त्यभीक्ष्णम्। ऊर्ध्वगमनेऽपि पततिः क्वचित्सकर्मको दृष्टः—उत्पपातोदङ्मुखः खमिति मेघदूते। हन्तुं कलहकारोऽसौ शब्दकारः पपात खम् इति च भट्टौ (५।१००)। इदं चात्रानुषङ्गिकमुच्यते—अनुपसृष्टोऽपि पततिरुड्डयनेऽर्थे बहुलं प्रयुज्यत इत्यभिव्यक्तं प्रागुदाहृतेषु। अत एव शत्रन्तः पतच्छब्दः पक्षिपर्यायतां गतः। तथा च किराते (६।१) प्रयोगः—परमः पुमानिव पतिं पतताम् इति। कर्मणोऽविवक्षायां सर्वोऽपि धातुरकर्मको भवति। तथा च भारते प्रयोगः—अश्नाम्याच्छादयामीति प्रपश्यन्पापपूरुषः। नास्पर्धं कुरुते यस्तु पुरुषः सोऽधमः स्मृतः॥ (सभा० ५०।१७॥) यदा समेता बहवस्त्वया राजर्षयः सह। कथयिष्यन्ति…इत्यत्र श्रीरामायणे (२।१२।४०) च। सह कथयिष्यन्ति = संकथयिष्यन्ति = संवदिष्यन्ति। भारतेऽपि कथिरविवक्षितकर्माकर्मकः प्रयुक्तः—एवं सनत्सुजातेन विदुरेण च धीमता। सार्धं कथयतो राज्ञः सा व्यतीयाय शर्वरी (उद्योग० ४७।१)॥ तथा तौ कथयन्तौ च चिन्तयन्तौ च यत्क्षमम् (उद्योग० ११४।९)। इति च।

वृषु सेचन इति सकर्मकः। कर्मणः प्रसिद्धेस्तु तन्नोच्यत इत्यकर्मको भवति। देवो वर्षति। जलमित्यनुक्तमपि गम्यते। अर्थगत्यर्थः शब्दप्रयोगः। स चेदर्थोऽन्तरेणापि शब्दं गम्यते नासौ प्रयुज्यते। अत एव जलमिति नोपादीयते। जलातिरिक्तं कर्म तु न न प्रयुज्यते। पार्थः शरान्वर्षति। क्वचित्तु प्रसिद्धमपि जलादिकं कर्म श्रूयत एव। तद्यथा—तेन नापो यथाकालं देवो वर्षतीति चरके (विमान० ३।२४)। सोऽयं लाघवं प्रत्यनादरो वक्तुः।

दिवादयोऽकर्मकाः। अल्पा एव तु सकर्मका इति कृतान्तः। तेष्वल्पेषु मध्ये पुष पुष्टाविति प्रायेण सकर्मको दृश्यते। तथा च कवीनां प्रयोगाः—सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् इति शाकुन्तले; पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणीति च कुमारे (१।२५)। वेदे खल्वपि—नार्यमणं पुष्यति नो सखायम् (ऋ० १०।११७।६) इति। परमयमपि क्वचिदकर्मक इत्यत्र पुष्यसिध्यौ नक्षत्रे (३।१।११६) इति सूत्रं लिङ्गम्। पुष्य इत्य-

यथा यथा पुष्यति शीतकालस्तुषारचूर्णोत्करकीर्णवात: (का०मी० १।१८)।



धिकरणवृत्तिः। पुष्यन्त्यर्था अस्मिन्निति पुष्यो नाम नक्षत्रम्। वेदे खल्वप्यय-मकर्मको दृष्टः। तद्यथा—पुनरेता निवर्तन्तामस्मिन्पुष्यन्तु गोपतौ (ऋ० १०।१९।३॥)। अन्यत्राप्यकर्मकत्वाङ्गीकारेण व्युत्पत्तिर्दृश्यते—पुष्यति जले पुष्करः पद्मम्। पुष्णाति धान्यादिकमिति जलादिकमपि। पुष्यति शब्दोऽत्र, वाद्यमुखं चेति पुषः कित् इति सूत्रे (उणा० ४।४) नारायणः। चरके खल्वपि पुषिरकर्मको दृष्टः। स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः। रुद्ध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः॥ इति (विमान० ३।२४)। स्रोतसा च यथा स्वेन धातुः पुष्यति धातुत इति च तत्रैव (चिकि० ८।३९)। भट्टिरपि पुषिम-कर्मकं प्रयुङ्क्ते। तद्यथा—अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां तव। पतिरित्यब्रवीत् (४।२९)। देह इहापुष्यस्सुरामिषैः (१७।३२) इति च। अत्र देहमपुष्य इति पाठान्तरम्। तत्र देहं पोषितवानसि। अन्तर्भावितण्यर्थो द्रष्टव्य इति जयमङ्गला।^

दिवादिषु येऽकर्मकास्त एव गणान्तरेऽनूदिताः सकर्मका भवन्ति। प्रीङ् प्रीताविति दिवादिष्वकर्मकः। तथा च कवीनां प्रयोगाः—तत्र सौधगतः पश्यन्यमुनां चक्रवाकिनीम्। हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये॥ इति रघौ (१५।३०)। येनैवास्मासु प्रीयते भगवान्भुवनगुरुर्भैरवाचार्य इति हर्ष-चरिते (पृष्ठे १०२)। प्रकाममप्रीयत यज्वनां प्रिय इति च माघे (१।१७)। भारते खल्वपि—प्रीयामहे भवतां संगमेन (सभा० ५८।८॥)। परं प्रीणातीति प्रिय इति क्रैयादिकेन व्युत्पत्तिर्दर्शिता न तु दैवादिकेन। दिवादीन् व्याचक्षाणो दीक्षितो यदाह—राधो हिंसायाम् इत्येत्त्वाभ्यासलोपाविह न, हिंसार्थस्य सकर्मक-तया दैवादिकत्वायोगाद् इति तदपि नो दर्शनं समर्थयते। रुष रिष हिंसायां दिवादी अकर्मकौ। तावेव भ्वादी सकर्मकौ। 'मा वो रिषत् खनिता यस्मै चाहं खनामि वः' इति (ऋ० १०।९७।२०)। अत्र रिषत् इति दिवादिरिषेर्लुङ्। मा रिषत् हिंसां मास्म प्रापदित्यर्थः। कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जात-वेदो न रिष्याः (ऋ० १०।५२।७)। न म्रियस इति सायणः। धर्तारस्ते मेखले मा रिषामेति च मन्त्रब्राह्मणे (१।६।२८॥)। न वा उ एतन्म्रियसे न रिष्यसि इति शुक्लयजुःसंहितायाम् (२३।१६)। श्रमेण तपसारिषंस्तस्मादपय इति च शतपथे (६।१।१।१)। अरिषन्निति लुङि रूपम्। अतः सकर्मकत्वलाभाय णिच्प्रयोगः सूपपन्नो भवति—उदुत्स तिष्ठ प्रतितिष्ठ मा रिषो मेमं यज्ञं यजमानं च रीरिष इत्यत्र (आप०,श्रौ० ९।५।१८।९)। एवं ह्यायुर्न रिष्यतीति वसिष्ठ-धर्मसूत्रे (६।१०॥)। रुषिः क्रोधेऽपि वर्तते। क्रोधो नाम हिंसां प्रयुङ्क्ते। क्रोध-मूला हि सा। नाक्रुद्ध्वा हिनस्तीति हिंसार्थः क्रोधार्थे संक्रान्तः। क्रोधार्थोऽपि

रुष्यतिरकर्मकः। ततोऽरुष्यदनर्दच्चेति भट्टौ ( १०।४० )। मा मुहो मा रुषो ऽधुनेति च ( १५।१६ )। तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यत इति मनुवचने ( ४।१७८ ) तु भौवादिकस्य रिषेः कर्मणि लटि रूपम्। मीङ् हिंसायामिति दिवादिरकर्मकः। न तस्य लोमापि मीयत इत्युपनिषदि। स्थाणुं वर्छति गर्तं वा पात्यते प्रमीयते वेति च ब्राह्मणे। मीञ् क्र्यादिस्तु सकर्मकः। तद्यथा—मिनाति[1] श्रियं जरिमा तनूनाम् ( ऋ० १।१७९।१ ) इत्यृग्वर्णे। लौकिके साहित्ये चास्य विरलः प्रयोग इति दुर्लभान्युदाहरणानि। लीङ् श्लेषण इति दिवादिरकर्मकः। आलीयतेऽस्मिन्निर्त्यालयः। ली श्लेषणे क्र्यादिः सकर्मकः। विलिनाति घृतम्। अत्रार्थेऽयं प्रायेण विपूर्वः। पुष्यतिरकर्मकोऽपि, पुष्णातिस्तु नित्यं सकर्मकः। रैपोषं पुष्णाति। क्लिश उपतापे दिवादिरकर्मकः। तथैव चार्थनिर्देशोऽभूत्। त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम् ( मनौ ८।१६९ )। अप्युपदेशग्रहणे नातिक्लिश्यते वः शिष्या ( मालविकायाम् ) इत्यत्र चाकर्मकः। श्नाविकरणस्तु सकर्मकः। यथा—क्लिश्नाति लब्धपरिपालनवृत्तिरेवेति शाकुन्तले। एवमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयमिति च कुमारे ( २।४० ) क्षुभ संचलन इति भ्वादिषु दिवादिषु क्र्यादिषु च पठितः। सर्वत्राकर्मक एवेत्युक्तार्थापवादः। रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मन इति रघौ ( ४।२१ )। सन्ध्यादिव क्षुभ्यति गाङ्गमम्भ इत्युत्तरे रामचरिते। प्राक्षुभन् कुलपर्वता इति भट्टौ ( १५।२५ )। नाक्षुभ्नाद्राक्षसो भ्रातुः शक्तिं चोदग्रहद् गुरुम् इति च ( १७।९० ) क्रमेणोदाहरणानि।

राधोऽकर्मकाद् वृद्धावेवेति धातुपाठः। अकर्मको राधिः श्यनं लभते वृद्ध्यादिष्वर्थेष्विति तदर्थः। न दूये सात्वतीसूनुर्यन्मह्यमपराध्यतीत्यत्र माघे ( २।४३ ) मय्यपराधमाचरतीत्यर्थः। देवदत्ताय राध्यति गर्गः। देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः। हिंसायामर्थे सकर्मकः श्नुविकरणो भवति—शत्रुमपराध्नोति ( हिनस्ति ) इत्यत्र यथा। राध्यत्योदनः ( = सिध्यति )। राध्नोत्योदनम् ( = साध्नोति, रन्धयति )। अपपूर्वोऽयं क्वचित् श्नुविकरणोऽप्यकर्मकः। तद्यथा—पुरा स नापराध्नोति सिद्धानां क्रमवादिनाम् ( भा० वन० १५५।२० )।

दिवादिः क्षमिरकर्मको भूवादिस्तु सकर्मकः। तथा च प्रथन्ते प्रयोगाः—सर्वथा वर्तमानस्य राज्ञः क्षन्तव्यमेव हि (भा० आदि० ४१।२४)। शिष्यस्याशिष्यवृत्तेस्तु न क्षन्तव्यं बुभूषतेत्यत्र (आदि० ७९।९)। एवं क्षान्तं मया तवेति च तत्रैव (उद्योग० १७६।५०)। अत्र क्षाम्यतेः प्रयोगोऽभ्युपेयः, अन्यथा

१. मीनातेर्निगमे ( ७।३।८१ ) इति वेदे मीनातेर्ह्रस्वः।

राज्ञ इत्यादिषु षष्ठी नोपपद्येत। नकुलं सहदेवं च बलवीर्यसमन्वितौ। सहायं वासुदेवं च न क्षंस्यति युधिष्ठिरः (भा० उद्योग० १३९।६)॥ अत्र प्राप्येति पूर्वश्लोकादनुवर्तते। न क्षंस्यति क्षमावान्न भविष्यतीति यावत्। व्यक्तं क्षमिरत्राकर्मकः। स दिवादिरेव भवितुमर्हति न भ्वादिः। तत्राकर्मकत्वे सति परस्मैपदित्वं मानम्। अत एव सकर्मकत्वलाभाय णिच्प्रयोग उपपन्नो भवति— मदर्थं तमृषिं वीक्ष्य क्षमयामास भार्गवम् (जननी मे महानदी) इति भारत उद्योगपर्वणि (१७८।९२)। अत्र भार्गवश्चक्षाम (क्षाम्यति स्म)। महानदी मे जननी भार्गवं क्षमयामास (क्षमयति स्म) इत्यणौ कर्तुर्णौ कर्मत्वम्। क्षमतेस्त्वेतत्प्रयोगः स्यादनुक्ते कर्तरि तृतीया स्यात्। अन्यत्रापि भारते सकर्मकत्वलाभाय क्षाम्यतेर्णिज् दृश्यते। तद्यथा—ततो दुर्योधनो द्रोणं क्षमयामास भारत (विराट० ५१।१७)। स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः। क्षमयामास कौन्तेयं भस्मच्छन्नमिवानलम् (विराट० ६८।६२) इत्यत्र। त्रयोदशाहमात्रं मे राजा क्षम्यतु (=क्षाम्यतु) भाविनि (भा० विराट० २४।२९) इत्यत्र क्षाम्यतेः श्यन्विकरणस्य तिङन्तस्याकर्मकतया प्रयोगो मुक्तसंशयमस्मदुक्तमुपस्तभ्नाति। क्षमतेस्तु 'निघ्नस्य मे भर्तृनिदेशरौक्ष्यं' देवि क्षमस्वेति बभूव नम्रः (रघु० १४।५८) इत्यादिषु सकर्मकतया प्रयोगः। माघस्तु क्षाम्यतिं सकर्मकं पश्यति। तथा ह्यस्य प्रयोगः—मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी। क्रियासमभिहारेण विराध्यन्तं क्षमेत कः (२।४३)॥ अत्र पूर्वार्द्धं गतायाः क्षाम्यत्विति क्रियाया विराध्यन्तमिति कर्म। क्वचिद् भौवादिकः क्षमिरप्यकर्मकतया प्रयोगमवतरति। तद्यथा—क्षमेदशक्तः सर्वस्य शक्तिमान् धर्मकारणात् (उद्योग० ३९।६०)। ह्रियमाणे धने राजन् वयं कस्य क्षमेमहि (शां० ८।१३)। कस्मै कर्मणेऽलं भवाम इत्यर्थः। पार्वतस्य क्षम त्वं वै क्षमतां पार्वतश्च ते (द्रोण० १९८।५८) इति च।

गृधिलुभी उभावप्यकर्मकौ। काव्यनाटकादिषु तिङन्तो गृधिर्विरलं प्रयुक्तः, कृदन्तस्तु बहुलम्। गर्धः, गर्धनः, गृध्नुरित्यादयः कृत्प्रत्ययान्ताः प्रयुज्यन्ते। गृध्यतीत्यादयस्तु क्वचिदेवास्मदादीनामविषय इति मन्त्रदृशां चिरन्तनमुनीनां च प्रयोगा उदाह्रियन्ते। यस्यागृधद्वेदने वाज्यक्षः (ऋ० १०।३४।४)। निराम्रिणो रिपवोन्नेषु जागृधुः (ऋ० २।२३।१६)। मा गृधः कस्य स्विद् धनम् (यजुः) इति। अत्रैकं वाक्यमिति मा स्म ते भ्रमो भूत्। मा गृधः, लुब्धो मा भूः इत्येकं वाक्यम्। धनं कस्य स्विदिति चापरम्। तत्रैव श्रुतेः स्वरसः। स्विदित्यनर्थको निपातः, प्रश्नार्थको वा। भारतकारोऽप्यत्र वाक्यभेदमूरीकुरुते। यदाह—कस्येदमिति कस्य स्वमिति वेदवचस्तथेति (आश्व०

३२।१६)। दुर्णामा तत्र मा गृधत् (अथर्व० ८।६।१)। मा गृधो नो अजाविषु (अथर्व० ११।३।२१) इति च। ते पत्नीष्वेव गन्धर्वा गर्धिष्यन्तीति शतपथे (३।९।३।२०)। भारते खल्वपि गृधिरकर्मको दृष्टः। तद्यथा—परवित्तेषु गृध्यतः (उद्योग० ७२।१८)। यदा गृध्येत्परभूतौ नृशंसः (२९।३०) इति च। प्रतिवैरं चिकीर्षन्तो गोषु गृद्धा महाबलाः (३०।२६) इति च तत्रैव। गृध्येदेषु न पण्डित इति (स्त्री० २।२५)। अन्योन्यमभिगर्जन्तो गोषु गृद्धाः (विराट० ३२।२)। तस्यां गृध्यन्ति राजानः शूरा धर्मार्थकोविदाः (भीष्म० ९।७२)। आचार्यो हि भृशं राजन्निग्रहे तव गृध्यतीति (द्रोण० १११।३५)। आमिषे गृध्यमानानाम् (=गृध्यताम्) अशुभं वै शुनामिव (शां० ७।१०)। नृप धर्मः परमो यत्स्वकेन राजा तुष्येन्न परस्वेषु गृध्येत् (वन० ४।७)। अनित्यं यौवनं रूपं जीवितं रत्नसंचयः। ऐश्वर्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः (२।४७) इति च। चरकेऽपि भारतवद् गृधिरकर्मकः। तद्यथा—स्नातानुलिप्तगात्रेऽपि यस्मिन्गृध्यन्ति मक्षिकाः (इन्द्रिय० ५।१५)। यो हि मां पुरुषो गृध्येद्यथान्याः प्राकृताः स्त्रियः (विराट० ९।३३)। राजन्किमन्यज्ज्ञातीनां वधाद् गृध्यन्ति देवताः (शां० ८।२५)। इह प्रदेशयोस्तु गृध्यतिः सकर्मकः प्रयुक्तः। तच्चिन्त्यम्। भट्टिरपि गृध्यसमर्थमवाप्स्यसि (४।५५) इत्यत्र गृधेः सकर्मकतामभिमन्यते। सोपसर्गस्य प्रतिपूर्वस्य गृध्यतेस्तु भारतेऽनेकत्र प्रयोगेषु सकर्मकत्वमास्थितम्। तद्यथा—आघ्राय सुबहून्गन्धांस्तानेव प्रतिगृध्यति (आश्व० ३१।९, १२, १५, १८)। तच्चेष्टम्। उपसर्गवशाद् धातूनां सकर्मकत्वापत्तेर्बहुत्र दृष्टेः। क्वचित्सोपसर्गकोऽपि गृध्यतिरकर्मकत्वं न जहाति यथा बाह्यद्रव्यविमुक्तस्य शारीरेष्वनुगृध्यत इत्यत्र भारते (शां० १३।२)। एतेन केवलो गृध्यतिर्नियतमकर्मक इति किमु वाच्यम्।

लुभिरप्यकर्मकत्वे नियत इति मुक्तसंशयमुपलभस्व। असम्भवं हेममयस्य जन्तोस्तथापि रामो लुलुभे (=लुलोभ) मृगाय। प्रायः समासन्नपराभवाणां धियो विपर्यस्ततरा भवन्तीति भारते (सभा० ७६।५)। असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगायेति च हितोपदेशे भारतच्छायानुकारिवचनम्। अन्यत्रापि भारते लुभिरकर्मको लक्षितः। तद्यथा—य एवं नैव कुप्यन्ते (=कुप्यन्ति) न लुभ्यन्ति तृणेष्वपीति (अनुशा० ५९।२२)। पाण्डवार्थे हि लुभ्यन्तः (उद्योग० १३०।२६) इति च। देवा अपि न लुभ्यन्ति त्वयीति (क० स० सा० ३२।९६)। लुब्धो यशसि न त्वर्थे (५५।३०) इति च। अस्ति चैतद् यथा
२ तस्मा लुभ्यन्तीव सुरासुराः (कथा० ३३।१६०)।

केचन धातवो धातुपाठे स्पष्टमकर्मकाः पठिताः। अर्थनिर्देशो हि तथालक्षणोऽभूत्। तथापि लोके सकर्मका अपि ते दृष्टाः। उपसर्जनं व्याकरणम्। व्यवहारः प्रधानम्। त एते भवन्ति—श्च्युतिर् क्षरणे, दु द्रु गतौ, स्रु गतौ, क्षर संचलने, स्यन्दू प्रस्रवण इति। पटलं श्च्योतति। एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि (उ० रा० च० ३।३४)। अत्र श्च्युतिरकर्मकः। लोचनेनामृतश्च्युना (क० स० सा० १०१।३०४) इत्यत्र च सकर्मकः। अग्न्यातपसम्प्रयोगाद् द्रवति घृतमित्यत्र द्रवतिरकर्मकः। रक्षांसि भीतानि दिशो द्रवन्तीत्यत्र गीतासु तु सकर्मकः। अवस्रवेदघशंसोऽवतरमित्यत्र (ऋ० १।१२९।६) स्रवतिरकर्मकः। स्रवत्यनोङ्कृतं पूर्वं पश्चात्तु विशीर्यत इति मनुवचने (२।७४), धनाद्धि धर्मः स्रवति शैलादधि नदी यथेत्यत्र, न हि निम्बात्स्रवेत्क्षौद्रम् (रा० २।३५। १७) इत्यत्र चाकर्मकः। तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्मेति (आप० २।५।२)। स्रवत्युदकं कुण्डिकेति भाष्ये। वित्रेसुस्तावकाः सैन्याः शकृन्मूत्रे च सुस्रुवुः (भा० शल्य २५।३२)। स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि इति कुमारे (१।४५), कुञ्जरेण स्रवता मदम् इति कथासरित्सागरे। न हि मलयगतश्चन्दनतरुः परशुप्रहतः स्रवेत् पूयम् इत्यत्र च सकर्मकः। तपः क्षरति विस्मयाद् इत्यत्र (मनौ ४।२३७), तेनास्य क्षरति प्रज्ञेत्यत्र (मनौ २।९९॥) च क्षरतिरकर्मकः। आपश्चिदस्मै घृतमित्क्षरन्ति (अथर्व ७।१८।२), तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु (मनौ २।१०७)। यो येनार्थी तस्य तत्प्रक्षरन्ती वाङ्मूर्तिर्मे देवता संनिधत्ताम् इत्यत्र (बा० रा० १।१४) च सकर्मकः। स्यन्दन्ते सरितः सागराय न च सर्वाः समुद्रगा भवन्ति। तीव्रं स्यन्दिष्यते मेघैः (भट्टौ १६।७), मत्स्या उदके स्यन्दन्ते। शिरामुखैः स्यन्दत एव रक्तम् (नागानन्दे ५।१६) इत्यत्र स्यन्दतिरकर्मकः। सस्यन्दे शोणितं व्योम इत्यत्र (भट्टौ १४।९८) च सकर्मकः। अत्र सर्वत्र सकर्मकत्वमन्तर्भावितण्यर्थत्वादुपपादयन्ति। एवं शुच शोक इत्यनुपसृष्टः केवलोऽपि सकर्मको दृष्टोऽकर्मकश्च। तद्यथा—अथैनमद्रेस्तनया शुशोच (रघौ २।३७)। किं शोचतेहाभ्युदये बतास्मान् (भट्टौ ३।१२) इत्यत्र शोचतिः सकर्मकः। शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलमित्यत्र मनौ (३।५७) चाकर्मकः। सोपसर्गकस्तु नैयत्येन सकर्मकः।[१] अशोच्यानन्वशोचस्त्वमित्यत्र गीतासु यथा।

अन्तर्णीतक्रियान्तरा अकर्मिका अपि क्रियाः सकर्मिका भवन्ति। तद्यथा—भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् (रघौ १२।१०४)। अत्र

१. धातूनामुपसर्गवशात्सकर्मकत्वाकर्मकत्वे इति विषयोऽस्माभिरुपसर्गार्थचन्द्रिकायां वितत्य निरूपितः। स तत्रैव द्रष्टव्यः।

अन्यत्रापि कृशधातिरकर्मको दृष्टः — न मेद्यतोऽनु मेद्यति। न कृश्यतोऽनुकृश्यति (तै० ब्रा० १।२।६।३)।



प्रस्थानक्रियाया अकर्मकत्वेऽपि तदङ्गभूतोद्दिशिक्रियापेक्षया सकर्मकत्वम्। एवमन्यत्रापि। ऋषयो वै सरस्वत्यां सत्रमासत इति भारते आदिपर्वणि। सत्रमुद्दिश्येत्यर्थः। यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् इति कौषीतकिन (३।३) आमनन्ति। अथ प्रायमुपवेक्ष्यामीति श्रीरामायणे। प्रायमनशनमुद्दिश्य कृतासना भविष्यामीत्यर्थः। इहैव प्रायमासिष्य इति च (४।५३।१९)। यथा स्वगृहस्थः श्वा व्याघ्रं वनगतं भषेत् (भा० कर्ण० )। व्याघ्रमुद्दिश्य बुक्केदित्यर्थः।

अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम्। यथा कुसूलान्पचतीत्यत्रादानगर्भः पाकोऽभिधीयत इति मल्लिनाथः। एवं रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वयेति (१८।३०) भट्टिप्रयोगे रुदेरकर्मकत्वेऽपि तदङ्गभूतज्ञानक्रियापेक्षया सकर्मकत्वम्।

क्वचिद् धात्वर्थनिर्देशो विभ्रमकोऽभूदित्यवश्यप्रतिपत्तव्यम्। गृधु आकाङ्क्षायामिति दिवादिरकर्मक इति दर्शितचरम्। अर्थनिर्देशस्तु सकर्मकोऽयमिति विभ्रमयति। धनं गृध्यत्यभिकाङ्क्षतीति प्रयोगप्रसङ्गात्। एवं कृश तनूकरण इत्यर्थनिर्देशानुरोधात्सकर्मकः प्रतीयते। भवति चायं प्रायेणाकर्मक इतीहैवानुपदं व्यक्तं भविष्यति। सप्त मेधान्पशवः पर्यगृह्णन् स एषां ज्योतिष्माँ उत यश्चकर्श इत्याथर्वणिकाः (अथर्व० १२।३।१६)। तस्मादितर आत्मा मेद्यति च कृश्यति चेति ब्राह्मणम् (ताण्ड्य० ५।१।७)। अत्रोभयत्राकर्मकता विस्पष्टा। अत एव लोके वृत्तिकर्शित इत्यादिषु सकर्मकत्वलाभाय णिच् प्रयुज्यते। कृश्यति तनूकरोत्याधारमिति कृशानुरित्यत्र त्वन्तर्भावितण्यर्थः कृश्यतिर्द्रष्टव्यः।

तृप प्रीणने, तृप प्रीणन इत्येके। पूर्वो दिवादिरुत्तरस्तु स्वादिः। उभावप्यकर्मकौ। अर्थनिर्देशस्तु पूर्ववद् व्यामोहकः। प्रीणनमिति तृप्तिर्ग्राह्या न तु तर्पणमपि। पितॄनताप्सीद् इति भट्टिप्रयोगस्तु चिन्त्यः। अन्यत्रापि भट्टौ क्लिशादिधातुविषये सकर्मकाकर्मकत्वसंकरो दृष्टः[1]।

शद्लृ शातन इति भूवादिः सर्वत्र प्रयोगेऽकर्मको दृष्टः शत्स्यन्ति ते दन्ता इत्यादौ। अत एव सकर्मकत्वलाभाय णिच्प्रयुज्यते—शादयति गाः। शातयति शत्रूणां शिरांसि। शातनमित्यर्थनिर्देशस्तु व्यामोहयति धिषणाम्। अत एव विशीर्णतायामयम्। शातनं तु विषयतया निर्दिश्यत इति कौमुद्यां दीक्षितः।

यद्यपि सर्वे नवगण्यां पठिता धातवः स्वार्थे णिचं लभन्ते इति वैयाकरणाः, तथापि पूञ् पवने, ओहाक् त्यागे इति णिच्सहितौ प्राकृतेऽर्थे प्रयोगमवतरतः

१. नृपात्मजौ चिक्लिशतुः ससीतौ (३।२१) इत्यत्र यथा।

प्रायेण। पावयतेः प्रयोगो यथा—प्रणवो व्याहृतयः सावित्री चेत्येते पञ्च ब्रह्मयज्ञा अहरहर्ब्राह्मणं किल्बिषात् पावयन्ति (बौ० ध० २।५।८।१४)। न पावयिष्यन्ति हि पापमापः (बुद्धचरिते ७।३०)। यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वय इति कुमारे (५।३७)। वैतानास्त्वां वह्नयः पावयन्तु इति शाकुन्तले (४।७)। अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैरिति मनौ (३।१८३)।

हापयतेः खल्वपि—पञ्चैतान्यो महायज्ञान्न हापयति शक्तित इति मनौ (३।७१)। नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् (४।२१) इति। ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् (८।२०६।।) इति च। नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेदिति (याज्ञ० १।१२१)। सर्वऋतवो विवाहे माघचैत्रौ मासौ परिहाप्योत्तरं च नैदाघम् इति वाराहगृह्ये (३।१३)। द्रुतमेतु न हापयिष्यते सदृशं तस्य विधातुमुत्तरमिति च माघे (१६।३३)।

इत्यवसिता धातुविषया चिन्ता।।

## कारकाणां विवक्षापारतन्त्र्यम्

यदुद्गिरन्ति प्रामाणिका विवक्षातः कारकाणि भवन्तीति तत्र विमृश्यते केयं विवक्षा नामेति यामनुरुन्धन्ति कारकाणि। वक्तुरिच्छा विवक्षेति चेद्यथा यस्मै रोचेत तथैव स प्रयुञ्जीतेति प्रसङ्गः। नेत्याह। लौकिकी हि विवक्षा प्रभवति न प्रायोक्त्रीति। लोकश्चात्र शिष्टलोक एवाभिप्रेतो वाचि प्रमाणभूतः सर्वस्यावधेयवचनः। अन्यथा सर्वमिदमाकुलं स्याद्वाङ्मयम्। सङ्कीर्येरन्प्रयोगा न व्यवतिष्ठेरन्निति महाननर्थ उपनतः स्यात्। इमां कारकविषयिणीं विवक्षामभिकृत्य किञ्चिद्विन्यस्यामो विदुषां विनोदाय। बीजादङ्कुरो जायत इत्यत्र बीजं जायमानस्य प्रकृतिरित्यर्थपरिग्रहेण तस्यापादानतां विवक्षामः। बीजमङ्कुरो जायत इत्यत्र परिणामधर्मपुरस्कारेण भेदापोहेन प्रकृतित्वतिरस्कारेण च तस्यैव कर्तृतामिति सर्वत्र व्यवहारे बुद्धिरेव प्रभवति। यदाऽविवक्षितभेदं जननव्यापारमभिप्रेमस्तदा मातरपितरौ पुत्रं जनयत इति मातुः पितुश्चोभयोरपि कर्तृत्वम्। यदा कः कथं जनयतीति भेदो विवक्ष्यते तदाऽयं पिताऽस्यां मातरि बीजमाधत्ते पतति वा बीजमस्मादस्यामिति पितुः कर्तृत्वमपादानत्वं च। पतद्बीजधारणक्रियां कुर्वती माता त्वधिकरणमेव। तथा च शिष्टप्रयोगाः प्रथन्ते—ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते (मनु० १०।८)। द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् इति च (मनु०१०।२०)। सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्येति कुमारे (१।२२)। न ह्यस्य विद्यते कर्म किञ्चिदामौञ्जिबन्धनात्। वृत्त्या

वेदे खल्वपि—तस्य ह शतं जाया बभूवुस्तासु पुत्रं न लेभे (ऐ० ब्रा० ७।१३)।



शूद्रसमो ज्ञेयो यावद्वेदे न जायते ॥ (वसिष्ठ० ध० २।१२) । सुदक्षिणायां तनयं ययाच इति रघौ । अत्र जनिक्रिया भविष्यन्ती गम्या । माऽऽत्मनः सन्ततिं द्राक्षीत्स्वेषु दारेषु दुःखित इति श्रीरामायणे भरतशपथेषु (२।७५।३६)। अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः । मयि जातो दशरथात्कथमुञ्छेन वर्तयेत् (२।२४।२॥) इति च । यत्तु कथं दशरथेन त्वं जातः पापो महात्मना (रा० ४।१७।४३) इत्यत्र पितुरपादानत्वं व्यपोह्य करणत्वमभ्युपगतं तच्चिन्त्यम् । अथवा जात इत्यन्तर्णीत-ण्यर्थकं ज्ञेयम् । तेन दशरथेनेत्यत्र कर्तर्यनुक्ते तृतीया सूपपन्ना भवति । एवं कल्याणे बत नक्षत्रे मया जातोऽसि पुत्रक (रा० २।४।४०) इत्यत्रापि ज्ञेयम् । जातो जनित इति तिलककारः । तज्जायाया जायात्वं यदस्यां जायते पुनरिति ब्राह्मणकृताऽधिकरणे व्युत्पत्तिरपि रूढिगतायां विवक्षायां लिङ्गम् ।

कर्त्रादीनि लोके प्रतिनियतविषयाणि न क्वचिदवलोक्यन्ते । अचेतनेष्वपि रथो याति नदी वहतीत्यादिषु कर्त्रभिलापो यतः । सर्वत्र प्राधान्यमगुणाभावो वाऽस्त्येव । विवक्ष्यते हि सः ।

यथानिरूपणं शब्दप्रयोग इति शाब्दिकाः । विवक्षा हि प्रयोक्तॄणां यथा यथा प्रवर्तते तथा तथा परिवर्तन्ते कारकाणीत्युक्तप्रायमपि पुरस्तादिह पल्लवयामो भूयो-वैशद्याय । तद् गच्छति पथिदूतयोः (४।३।८५) । अत्र तत्स्थेषु गच्छत्सु पन्था गच्छतीत्युच्यते । पन्था हि तत्र मुक्तसंशयमधिकरणम् । तथापि तत्र लौकिकी विवक्षा प्रभवति येन सदप्यधिकरणत्वं न विवक्ष्यतेऽसच्च कर्तृत्वं विवक्ष्यते । एव-मन्यत्रापि सतोऽविवक्षा दृश्यते । अलोमिकैडकाऽनुदरा कन्येति । अत्र लोमानि न सन्तीति न, उदरमेव वा नास्तीति न । असंभवात् । तथापि तत्सत्ता न विवक्ष्यत इति नञा प्रतिषिध्यते । अभिनिष्क्रामति द्वारम् (४।३।८६) । द्वारमभिनिष्क्रमण-क्रियायां करणं प्रसिद्धं तदिह स्वातन्त्र्येण विवक्ष्यते । दाणश्च सा चेच्चतुर्थ्यर्थे (१।३।५५) । सम्प्रपूर्वाद् दाण आत्मनेपदं भवति यदा तस्य चतुर्थ्यर्थे तृतीयया श्रूयते योगः । कदा च चतुर्थ्यर्थे तृतीयायाः प्रयोगः । यदा सम्प्रदानं साधकतम-त्वेन विवक्ष्यते, विवक्षातः कारकाणि भवन्तीति कृत्वा, न पुनः स्वभावतः । विवक्षा च प्रायौगिकी समाश्रीयते न प्रायोक्त्री । दिवः कर्म च (१।४।४३) । करणे कर्मविवक्षा करणविवक्षा च । इदमत्राकूतं स्यात्प्रयोक्तुः शिष्टस्य, यो ह्यक्षैर्विजिगीषतेऽक्षानप्यसौ विजिगीषते । अविजिता अक्षाः कथं देवने जयाय कल्पेरन्निति स तर्कयते । कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा । इदं दानार्थं यजिमधिकृत्य वाक्यकारेणोक्तम् । पशुना रुद्रं यजते । अयं भावः । अत्र पूजातात्पर्यकं दानमिति दीयमानेन पशुनाऽभिपूजयामि रुद्रमित्यभिप्रैति यजमानः । तेन सत्यपि दानक्रिया निर्मीयते पूजनेनाध्यारोपितेन । ततश्च कारक-

विपर्ययः सिद्धो भवत्यवाचनिकः । इयद्धि प्राभवत्यं विवक्षाया बुद्धिनिबन्धनायाः। अधिशीङ्स्थासां कर्म (१।४।४६), अभिनिविशश्च (१।४।४७) इत्यादिषु विवक्षां हेतूकृत्याधिकरणस्य कर्मसंज्ञाविधानं दृश्यते। विशतेस्तु निरुपसर्गस्योपसर्गान्तर-सहचरितस्य च प्रयोग उभयी विवक्षा दृश्यते। मधुनि विशन्ति मधुकराः। ग्रामं प्रविशतीति। जटाधरः सञ्जुहुधीह पावकम् इत्यत्र किराते (१।४४) ऽप्यधिकरणे कर्मत्वोपचारः।

कर्मणः करणभावश्चापि दृश्यते। अग्निष्टोमेन यजेत स्वर्गकामः। अग्नि-ष्टोमाख्येन यागेन स्वर्गं भावयेदित्यर्थः। अग्निष्टोमः स्वर्गभावनायां करणं भवति। यद्यप्यसौ स्वर्गभावनां प्रति साध्यत्वेनेप्सिततमत्वादनुष्ठीयमानः कर्मत्वमनुभवति तथापि तस्य शक्तिभेदात्करणत्वं न विरुध्यते। यथा निपीयमानेन मधुना मत्त इत्यत्र कर्मत्वमनुभवतो मधुनः करणभावो भवति। अत्र व्यवहारे करणे यजः (३।२।८५) इति सूत्रं लिङ्गम्।

कचिद् गृहीत इव केशेषु मृत्युना धर्ममाचरेत्, आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यत इत्यादिषु करणेऽधिकरणत्वं विवक्षन्ति लौकिकाः। तत्र तेनेदमिति सरूपे (२।२।२७) इति तत्र शास्त्रीयं लिङ्गम्।

कर्मणोऽपि कर्तृभावो दृष्टः। कर्मवत्कर्मणा तुल्यक्रियः (३।१।८७) इत्यत्र तत्प्रतिपत्तेः।

क्वचित्कर्मणोऽधिकरणविवक्षा यथा—ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्रा इति रघौ (२।६२)। आर्तत्राणाय वः शस्त्रं न प्रहर्तुम-नागसीति शाकुन्तले। यदा चावयवि प्रहरतेः कर्म भवति तदाऽवयवोऽधिकरण-मिति विवक्ष्यते। इन्द्रजिल्लक्ष्मणमुरसि प्रजहार। ग्रह्यादि-धातुप्रयोगेऽवयविनि कर्मणि निर्दिष्टेऽवयवेऽधिकरणत्वविवक्षा दृश्यते। तद्यथा—ततो दुर्योधनः कर्ण-मालम्ब्याग्रकरे नृपः (भा० आदि० १३६।२०)। जग्राह चरणे ग्राहः कुन्तीपुत्रं धनञ्जयम् इति च (भा० आदि० २१६।१०)। अवयविनि षष्ठीनिर्दिष्टे त्ववयवे

---

१. वेदाङ्गेषु क्वचित् शिक्षतिर्दानार्थकः श्रूयते। तत्प्रयोगेऽपि सम्प्रदाने द्वितीयां पश्यामः कर्मणि च तृतीयाम्। स शन्तनुर्देवापिं शिशिक्ष राज्येनेति निरुक्ते (२।११)। संहितासु ० प्रायशो यथाप्राप्तं सम्प्रदाने चतुर्थीं विलोकयामः—इन्द्राय सुन्वद् ऋषये च शिक्षद् इति (ऋ० १०।२७।२२)। स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेनेति च (ऋ० ३।५९।२)। भद्रं दात्रे यजमानाय शिक्षन् इत्यथर्वसंहितायाम् (९।४।१)। यजमानाय शिक्षसि सुन्वत इति च तत्रैव (२०।५५।२)।

कर्मणि नाधिकरणत्वविवक्षा—तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी इति रघौ यथा। अन्यत्रापि कर्मणोऽधिकरणत्वविवक्षा दृश्यते—क्रोधादुक्तं सैन्धवे (=सिन्धुराजे जयद्रथे) चार्जुनेनेत्यत्र भारते (आदि० १।१९२)।

प्रहरतेः प्रयोगे विभक्तिव्यभिचारोऽपि लक्ष्यते क्वाचित्कः—विभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति भारते (आदि०)।

अन्यत्रापादानेऽप्यधिकरणत्वविवक्षा यथा बलाहके विद्योतते विद्युत्। बलाहकस्यापाययुक्तत्वादपादानसंज्ञा प्राप्नोति। अपादानमुत्तराणीति वार्तिकमत्र बाधे लिङ्गम्।

क्वचित्सम्प्रदानधियमपोह्याधिकरणमुत्प्रेक्षन्ते कुशलाः प्रयोक्तारः। तद्यथा—

न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा।
सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥

इति कामन्दकः। समसमब्राह्मणे दानमिति च मनुः। दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनमिति च भारते। वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे इत्युत्तरे रामचरिते। सर्वत्र चामीषु प्रयोगेषु तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते (५।१।४७) इति वचः प्रमाणम्।

## लभेर्ण्यन्तकस्य द्विकर्मकत्वम्

प्राप्त्यर्थकोऽपि लभिः प्रायेण व्यवहारे द्विकर्मकः। इदं च तदैवोपपद्यते यदाऽयं गत्यर्थक इति प्रतिपद्येत। गत्यर्थकतामेवास्याभीच्छन्ति शिष्टा इति निदर्शनैः कैरपि व्यक्तयामः—स क्षेमधन्वानममोघधन्वा पुत्रं प्रजाक्षेमविधानदक्षम्। क्ष्मां लम्भयित्वा—इति रघौ (१८।९)। लम्भयित्वा=प्रापय्य। मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैरिति किराते (२।५५)। गोपितुं भुवमिमां मरुत्वता शैलवासमनुनीय लम्भित इति च (१६।६७)। शरीरं वासुदेवस्य रामस्य च महात्मनः। संस्कारं लम्भयामास वृष्णीनां च प्रधानत इति भारते (आदि० २।३५९)। ततः स राजा संस्कारं पुत्रपत्नीमलम्भयद् इति मार्कण्डेये (२२।४६)। स्त्रीभावं चापि लम्भितेति हरिवंशे (९९।२९)। तेन पित्रा स बालोऽपि विद्याः स्नेहेन लम्भित इति कथासरित्सागरे (६५।७४)। दीर्घिकासु कमलानि विकासं लम्भयन्ति शिशिराः शशिभास इति वामनीयायां काव्यालङ्कारसूत्रवृत्तौ समुद्धारः। एतानौपहारिकमोदकानार्य्यमाणवकं लम्भयेति विक्रमोर्वशीये तृतीयेऽङ्के।

यथानिर्देशं प्राप्त्यर्थतायामुपेतायां लभेः प्रयोगेऽणौ कर्तुः प्रयोज्यकर्मत्वानापत्तेरनुक्ते कर्तरि तृतीयाश्रुतिर्नानुपपन्ना। तथा च क्वाचित्का द्विनाः प्रयोगा

दृक्पथातिथितां भजन्ते—सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन्निति माघे (१।२५)। सितिमा मुनेर्वपुर्लभते। तं सितिमानं मुनेर्वपुर्लभमानं प्रयुङ्क्ते, लम्भयति। कर्तरि वर्तमाने शतरि लम्भयन्। दयिताभिरनन्ततेजसा मुनिनाऽसौ परिकल्प्य लम्भित इति जानकीहरणे (४।५)। दयिता अमुं (चरुं) लब्धवत्यः। मुनिर्दयिताभिश्चरुं लम्भितवान्। मुनिना दयिताभिरसौ (चरुः) लम्भितः। दयिताभिरित्यनुक्ते कर्तरि तृतीया। लम्भित इति मुख्ये कर्मणि क्तः।

इदं प्रयोगद्वैविध्यं काव्यालङ्कारसूत्रवृत्तिकृद्वामन इत्थङ्कारं व्यवस्थापयितुं समीहते—लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे (४।८)। अस्त्ययं लभिर्यः प्राप्त्युपसर्जनां गतिमाह। अस्ति च यो गत्युपसर्जनां प्राप्तिम् इति। सत्यं धात्वर्थस्य प्राप्त्युपसर्जनगतित्व एव गतिबुद्धिप्रत्यवसानार्थेत्यादिना शासनेन द्विकर्मकता सिध्येत्, प्राप्तौ प्रधानार्थत्वे त्वणि कर्तुर्णौ प्रयोज्यकर्मताया असिद्धिरिति द्विकर्मकता न प्रसिध्येत्। परं क्व प्रधानं गतिः क्व चोपसर्जनमिति कः कथमवसास्यति ? इहैव चाधस्तादुपन्यस्तेषु द्विकर्मकताया उदाहरणेषु गतेः प्राधान्यं कस्य नाम भासते ? गतिनान्तरीयिका प्राप्तिः, सर्वा प्राप्तिर्गतिपूर्विकेति त्वन्यत्। गतिः कारणं प्राप्तिश्च कार्यमित्यनयोः कार्यकारणभावः सम्बन्धः। कारणस्य प्राधान्याद् गतिरेव प्रधानत्वेन प्रकृतेऽभ्युपेयते शिष्टैः। शिष्टाश्च व्यवहारे प्रमाणम्। वस्तुगतं गतिप्राधान्यं स्यान्मा वा भूत्। विवक्ष्यते हि तच्छिष्टैरिति तदस्ति। विवक्षैव चेन्नियामिका वामनोक्ता व्यवस्था व्याख्यानमात्रतां नातिरिच्यते। नैषा प्रयोगनिर्माणपद्धतेः प्रदर्शिका भवति। तेनेयमकिञ्चित्करीति नार्थोऽनया। प्रयोगेषु लभेर्ण्यन्तस्य द्विकर्मकता यत्र तत्र प्रथते, अनुक्ते कर्तरि तृतीया तु विरलं प्रयुज्यते। तेन लभेर्गत्यर्थतामेवाभिप्रयन्ति शिष्टा इति शक्यं मुक्तसंशयं वक्तुम्।

किं चायमर्थ आपेर्व्यवहारतोऽप्युपोद्बलितो भवति। आपिरयं लभिना समानार्थकः सर्वत्र णौ द्विकर्मको दृष्टः। तद्यथा—वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वर इति कुमारे (४।११)। स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् इति रघौ (१४।१४५)। नक्तं भीरुरयं त्वमेव तमिमं राधे गृहं प्रापयेत्यमरुशतके। अभिमन्युतनयं परीक्षितमुदरादुपरतमेव निर्गतमुत्तराप्रलापोपजनितकृपो भगवान् वासुदेवो दुर्लभानसून्प्रापितवानिति कादम्बर्याम्। सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगा इति च माघे (२।१०४)। एवं यद्यापिर्णैयत्येन द्विकर्म्मकस्तर्हि लभिः कस्माद् द्विकर्मकत्वं व्यभिचरेत् ? व्यवहारवैषम्यं च कथं घटामञ्चेत् ? एकत्र द्विकर्म्मकतायां पक्षपातो-

ऽपरत्र नेति कथं युज्येत ? तस्माच्छिष्टदर्शनं जुषमाणैरस्माभिर्लभेर्गतिर्मुख्योऽर्थः प्राप्तिस्तु गौण इत्यवश्यमभ्युपेयमन्यथा प्रयोगव्यवस्थितिर्न स्यात्।

क्वचिदभिव्यक्ततरमप्यपादानत्वमुपेक्ष्य कारकान्तरं विवक्षन्ति सन्तः। देवदत्तः प्राणान्मुमोच। देवदत्तः प्राणैर्मुमुचे। इह देवदत्तस्य प्राणैः समं वियोग इति नितान्तमुत्तानम्। वियोगश्चोभयनिष्ठ इति वियोक्तारं वियुज्यमानं चार्थे समं निश्रयते। इदं च नितरां विवक्षानिघ्नं तयोः कतरस्यावधिभावः कल्प्येतेति। यदि नाम प्राणा ध्रुवोऽर्थोऽवधिरिति वा कल्प्येरंस्तदा देवदत्तस्य वियोक्तृता वियोगे कर्तृताऽर्थादापद्यते। तेन प्राणशब्दात्पञ्चम्या भवितव्यम्। परं मुच्लृ मोक्षण इत्ययं धातुः सकर्मकः। तत्प्रयोगे कर्माकाङ्क्षितं भवति। अपादानमुत्तराणि कारकाणि बाधन्त इति वचनादपादानत्वं प्रबाध्य कर्मविवक्षायां प्राणानिति द्वितीया। अथ देवदत्तोऽवधिरित्यभ्युपेयते तदोक्तरीत्या तस्यापादानतां प्रबाध्य मुञ्चतेः कर्मत्वेन तत्रोक्ते कर्मणि प्रथमा। प्राणैरिति चानुक्ते कर्तरि तृतीया सूपपन्नेति सर्वमवदातम्। मुचेः कर्मकर्तरि प्रयोगे तु प्राणादेरपादानत्वमविहतं तिष्ठति। यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति गीतासु। मुच्यते सर्वपापेभ्य इति चानेकत्र पुराणे। मोक्ष्यसे स्वयमेव मुक्तो भविष्यसीत्यर्थः। कस्मादित्याकाङ्क्षायामाह—अशुभात्। अत्रापादानबाधप्रसङ्ग एव नास्तीति न दुरवधारं सुधीभिः। स प्राणान्मुमोच, तम्प्राणा मुमुचुरिति वाक्यद्वयमभिप्रायभेदेनादौ प्रयुयुजिरे विवेक्तारो वक्तारः, कालान्तरे तु समानार्थकमेतदिति साङ्कर्येणेत्यवकल्पयामः। अत्र शास्त्रपारावारपारीणाः प्रमाणमिति नातोऽतिरिक्तं सहामहे वक्तुम्।

विवक्षया कर्तृकर्मादिव्यवहारः सर्व इति प्रसाधितं पुरस्तान्निदर्शिताश्च ते ते प्रदेशा यथाविवक्षमुपप्लवमानानां कारकाणाम्। तथापीदमत्रावधेयम्। न हि प्रयोक्त्रा निरवग्रहं यथा तथा शक्यं विवक्षितुम्। नेह तस्य स्वच्छन्दः प्रवर्तते। विवक्षा हि कुलवधूरिव न लौकिकीं प्रयोगमर्यादामतिक्रामति। विवक्षायाश्च नियतत्वात्सत्यप्यपाये धनुषा विध्यतीति भवति, न धनुषो विध्यतीति। व्यधनक्रियायां धनुष्करणं न, अपि तु निःसरतां शराणामेव करणत्वमिति प्रथमवैयाकरणानामपि[१] न न विदितम्। तथापि परमार्थं निरूपयंस्तथा च प्रयुञ्जानो लोके द्वेष्यतां याति। कंसपात्र्यां भुङ्क्त इत्येव प्रयोगो न तु कंसपात्र्या इति। कंसपात्र्या उद्धृत्यैव त्वोदनं भुङ्क्ते। तेन तस्या अपादानता सिद्धा। तामविवक्षित्वाऽधिकरणतैवाभ्युपेयते। अपादानविवक्षया पञ्चमीं प्रयुञ्जानो बाढं भवत्यपशब्दभाक्।

---

१. अचिरोपसम्पन्नोऽचिरादेव गुरुमुपश्लिष्टो वैयाकरणो व्याकरणस्याध्येता प्रथमवैयाकरणः। अत्रार्थे प्रथमोऽचिरोपसम्पत्तौ (६।२।५६) इति स्वरसूत्रं मानम्।

अन्यत्रापि विवक्षानैयत्यं दृश्यते। गतिवचनानां धातूनां प्रयोगे यानस्य करणत्वमेव विवक्ष्यते न जातुचिदधिकरणत्वम्। रथेन यातीत्युच्यते न तु रथे यातीति। तथा च ऋग्वर्णः—हिरण्ययेन सविता रथेन। देवो याति भुवनानि पश्यन्॥ (ऋ० १।३५।२)। यद्यपि रथोऽधिकरणशक्तिरिति नापह्नूयते। यानशब्दो हि करणसाधनः। अपरे यानपर्यायवाचिनोऽपि करणतां न जहति। तथा चात्मनः पदं विमानेन विगाहमानः (१३।१॥) इति रघुकारस्य प्रयोगः। अष्टाध्याय्यां तत्र तत्र तल्लिङ्गोपलम्भ इमां प्रयोगपद्धतिं समर्थयते। वह्यं करणम् (३।१।१०२)। वहत्यनेनेति वह्यं वाहनम्। करणे यत्प्रत्ययान्तं निपात्यते। दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे (३।२।१८२) इत्यनेन च पत्लृधातोः करणे ष्ट्रणा पत्त्रमिति व्युत्पाद्यते। पतति गच्छत्यनेनेति पत्त्रं वाहनम्। यानमात्रस्य करणत्वमैकान्तिकमित्यत्र चरति (४।४।८) इति शास्त्रमपि द्रढीयो मानम्। हस्तिना चरति हास्तिकः। शकटेन चरति शाकटिकः। यो गत्यर्थधातूनधिकृत्योक्तो नियामस्तस्य वह्यादयो धाआदयश्च गमनीया भवन्ति। किं च न केवलं मुख्यं यानमपि तूपचरितयानभावा अपि भावाः करणत्वेन व्यवह्रियन्ते न च व्यभिचारं सहन्ते। स्कन्धेन भारं वहतीत्यत्र स्कन्धे यानत्वाध्यारोपेण करणत्वमेवाभिप्रयन्ति न कदाचिदधिकरणत्वम्। तेन स्कन्धे भारं वहतीत्यपप्रयोगः। अत्रार्थे कवीनां प्रयोगा उपोद्बलकाः केचिन्निदर्श्यन्ते। वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः।(तमेव चागते काले भिन्द्याद् घटमिवाम्भसि॥) इति पञ्चतन्त्रे। शरत्तारागणतारं हारमुरसा दधानम् इति हर्षचरिते (पृ० ११४)। प्रश्रयमिवानम्रेण मौलिना पाण्डुरमुष्णीषमुद्वहतेति च (पृ० ६२)। गामधास्यत्कथं नागो मृणालमृदुभिः फणैरिति कुमारे (६।६८॥)। सर्वपुष्पमयीं दिव्यां शिरसा धारयन् स्रजम् इति श्रीरामायणे (६।२२।१९)। अङ्केनादाय वैदेहीं पपात भुवि रावणः। (३।५१।१९॥) इति च। रत्नभूता च कन्येयं······धृता गर्भेण वै मयेति हरिवंशे (२।४१)। दधुः शिरोभिर्भूपाला देवाः पौरन्दरीमिवेति रघौ (१७।७९)। धार्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता। जातीकटुकपूगानां लवङ्गस्य फलानि च॥ इति चरके (सूत्र० ५।७६)। मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बालेति कुमारे (१।३९॥)। गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् (१।२१॥) इति किराते। योद्धारोऽविभरुः शान्त्यै साक्षतं वारि मूर्धभिरिति भट्टौ (१७।५३)। तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थ इति च कुमारे (३।२२॥)। वहति सलिलोद्गारमु च्चैर्विमानैर्मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् इति

मेघे ( १।६४ )। अत्रोदाहरणेषु गतिर्वा प्रापणं वा नार्थो येन करणस्यावकाशः स्यात्। धारणमेव तु सर्वत्राभिप्रेयते। तेनाधिकरणत्वं प्राप्नोति। करणं चेह नितान्तमसत्। अधिकरणं च परमार्थसत्। तथापि करणत्वमेव विवक्षन्ति शिष्टा इति न बह्वन्वाख्येयम्।

अन्यत्रापि विवक्षानियमो दृश्यते। रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिमिति रघौ ( २।२८ )। गृहीत इव केशेषु मृत्युना धर्ममाचरेत् इति हितोपदेशे, केशेषु जग्राह याज्ञसेनीं दुःशासनः, शिरस्युपजिघ्रत्यम्बा डिम्भम्, कण्ठे गृह्णाति प्रियां कान्त इत्यत्र रश्मीनां केशशिरःकण्ठस्य चाधिकरणता लोके नियता। अन्यथा सम्भाव्य विभक्त्यन्तरं प्रयुञ्जानो जनो भ्रंशते व्यवहारवर्तन्या अक्षिगतश्च लोकस्य भवति। तेन यथात्र लोके समुदाचारो रक्षणीयः, श्रौती स्मार्ती वा व्यवस्थितिरास्थेया तथा वाङ्मयेऽपि लोकप्रतिष्ठितः शिष्टजुष्टो व्यवहारः सततं शीलनीयः साभिनिवेशं चानुसरणीयः।

धातूनामर्थान्तरसङ्क्रमादपि व्यतियन्ति कारकाणि। यथा सिञ्चतेः क्षरणेऽर्थे द्रवद्रव्यस्य कर्मत्वमार्द्रीकरणे च करणत्वम्। यथा मेघोऽमृतं सिञ्चति। सिञ्चतीवामृतैर्वपुरिति। तथा किरतेर्विक्षेपेऽर्थे रजआदीनां कर्मत्वं व्याप्तौ तु करणत्वमवस्थितम्। यथा रजः किरति वातः। रजसाऽवकिरति वातो वाटिकाम्। एवं ददातिकर्मणा सम्बद्धस्य न सर्वत्र सम्प्रदानता। न हि ददातिः सर्वत्र परस्वत्वापाद पूर्वके द्रव्यत्यागे वर्तते। दीयन्तां पक्षद्वाराणि ( विद्धशालभञ्जिकायाम् ), कवाटं देहीत्यत्र च पिधानेऽपि दृश्यते। ते गृहेऽग्निमदुः। घ्नतः पृष्ठं ददाति। पूर्वत्र वाक्ये गृहस्य सम्प्रदानत्वं न। ददातिरिह निक्षेपे वर्तते, तस्य चाधिकरणापेक्षा। अपरत्र हननं कुर्वतोऽपि तन्न। ददातिरत्र सन्निधापने वर्तते। तत्सम्बन्धापेक्षया घ्नत इति षष्ठी साध्वी। शकि शङ्कायामिति भ्वादिषु पठ्यते। शङ्का च भयम्। तेनाधर्माच्छङ्कते साधुरित्यपादानताऽधर्मस्य सिद्धा। स एवाङ्पूर्व उत्प्रेक्षायां वर्तते। तत्र कर्मत्वमेवेष्यते। यथा धर्मेऽप्यधर्ममाशङ्कते मूढः। सन्नन्तो गुपिर्निन्दायां पठ्यते। स यदा निन्दापूर्विकायां निवृत्तौ विवक्ष्यते तदा पापाज्जुगुप्सत इत्यपादानता निर्बाधा। यदा तु केवलायां निन्दायां प्रयुक्तिस्तदा कर्मत्वमेवानवद्यं शिष्टजुष्टं प्रसिध्यति। यथा—यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते ( भा० वन० २१२।८ )। किं त्वं मामजुगुप्सिष्ठा इति भट्टौ ( १५।१९ )। जुगुप्सेरन्न चाप्येनमिति याज्ञवल्क्यस्मृतौ ( ३।२९६ )। स्वर्गस्त्रीपूर्वनिर्माणं निजमेवाजुगुप्सतेति कथासरित्सागरे द्वितीये वेताले। जनापवादमात्रेण न जुगुप्सेत चात्मनीति काव्यमीमांसायां कविरहस्ये दशमेऽध्याये। अत्र निन्दाविषयविवक्षया कर्मत्वबाधेनात्मनीति वैषयिकी सप्तमी। यद्वा तद्वा भवतु। भार्गवस्तादृशानि तु

वीररत्नानि न जात्या जुगुप्सत इति बालरामायणे द्वितीयेऽङ्के। त्वं नोऽद्य जुगुप्ससे (=गर्हसे) इति भारते (द्रोण० १९७।१३)।

प्रपूर्वो हरतिराहनने वर्तते। यदा चायं प्रासनेऽभिप्रेयते तदेन्द्रो वृत्राय वज्रं प्राहरद् इति ताण्ड्यब्राह्मणे (१४।४।५)। न प्रमत्ताय भीताय विरथाय प्रयाचते। व्यसने वर्तमानाय प्रहरन्ति मनीषिणः॥ इति च भारते (द्रोण० १४३।८)। अत्र क्रियया यमभिप्रैति सोऽपि सम्प्रदानमिति वचनेनेन्द्रस्य प्रमत्तादीनां च सम्प्रदानता सूपपादा। क्रियार्थोपपदस्य च कर्मणि स्थानिन इति वा विभक्तिः समर्थनीया।

यजतिर्देवपूजासङ्गतिकरणदानेषु पठितः। देवान्यजते। यज्ञाहरणेऽपि वर्तते। अश्वमेधेन यजते। तत्र विशेषाकाङ्क्षायामश्वमेधे द्रव्यबुद्धिं विधाय करणत्वेन तत्परिग्रहो व्याख्येयः। अश्वमेधबुद्ध्या द्वारीभूतयेति वा नेयम्। जयतिः परोपसृष्टोऽभिभवे वर्तते। तथा चारीन्पराजयत इत्यादौ कर्मकारकमुपपद्यते। यदा चासहने प्रयुज्यते तदाऽसोढोऽर्थोऽपादानम्। अध्ययनात् पराजयते प्रमत्तश्छात्रः।

अर्पयतिप्रयोगे कारकनानात्वं दृश्यते तदपि तत्तदर्थविवक्षयोपपाद्यं भवति। त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये इत्यर्पयतिर्ददात्यर्थे प्रयुक्त इति युज्यते युष्मदः सम्प्रदानत्वम्। अर्पयतिर्नाम कथमिममर्थमर्पयतीति तावद् विमृश्यम्। ऋ गतिप्रापणयोरिति धातुर्णिच्सहकारेण प्रापणमर्थमाचष्टे, केवलस्तु गतिं वा प्राप्तिं वा। धातुपाठे गतिप्रापणयोरित्यर्थनिर्देशे प्रापणमिति प्राकृतेऽर्थे वर्तमानाद् आप्लृ व्याप्ताविति धातोर्ल्युटि रूपं न तु हेतुमण्ण्यन्तस्य। अर्तेर्हेतुमति णिचि प्रापणं नयनमर्थः। यश्चार्थः परत्र संक्रम्यते परं प्राप्यते स परस्मै सम्प्रदीयत इवेत्यर्थविवक्षया चतुर्थ्यौपयिक्येव। अन्यत्र तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चनेति कठोपनिषदि। सिंहो मतिविभ्रममिवार्पितो न किञ्चिदप्युदाहृतवान् इति तन्त्राख्यायिकायाम्। इत्यादिष्वर्पितशब्दो मुख्यया वृत्त्या गमितार्थाभिधायीति गत्यर्थत्वादणि कर्तुः णौ कर्मत्वम्। तच्च प्रयोज्यं कर्म क्तेनोक्तमिति देवशब्दात् सिंहशब्दाच्च प्रथमा। तच्छब्दान्मतिविभ्रमशब्दाच्चानुक्ते कर्मणि द्वितीया। दानार्थविवक्षाविरहान्नेह चतुर्थी।

क्वचित्सप्तम्यपि दृश्यते। अवगच्छति मूढचेतनः प्रियानाशं हृदि शल्यमर्पितम् इति रघौ (८।८८)। अपथे पदमर्पयन्ति हीति च (९।७४)। सीतामर्पय नन्तव्ये कोशदण्डात्मभूमिभिरिति च भट्टौ (९।१३६) अर्पयित्वेश्वरे प्रह्वः प्रमना विरमाम्यहम् इति चेहैव ग्रन्थान्ते। ईश्वरप्रणिधानं तस्मिन्परम-

गुरौ सर्वकर्मार्पणम् इति योगभाष्ये। अत्रेयं सप्तम्युपपत्तिः। यद्धि यं प्राप्यते द्रव्यं तत्तदन्तिकं प्राप्यते तत्सन्निकर्षे संनिधाप्यत इवेत्यर्थविवक्षायां सामीपिकेऽधिकरणे सप्तम्यपि साम्प्रतम्। न्यासार्थविवक्षायां शुद्धेऽधिकरणेऽपि सा दृश्यते। काठिन्यं स्थाविरे काये भवता सर्वमर्पितम् इति कुमारे (६।७३)। ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्यवान्। समार्पयत्...... (भा० विराट ६६।६)॥ क्वचिदन्यत्र तृतीयापि विलोक्यते। तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया। निमित्तवेधी स मुनिरिषीकाभिः समार्पयत्॥ इति भारते (उद्योग० ९६।३१)। अत्र समार्पयदित्यस्य समगमयदित्यर्थग्रहादिषीकाभिरित्यत्र सहार्थे तृतीयोपपन्नैव। कश्चिदाह—समार्पयदित्यस्याविध्यदित्यर्थ इति। तन्न। समयोजयद् आच्छादयदिति वा शब्दमर्यादया लभ्योऽर्थः। अविध्यदिति स्वार्थिकोऽर्थः। आतश्चायमेव शब्दार्थः। भारद्वाजस्ततो भीमं षड्विंशत्या समार्पयत्। भूयश्चैनं महाबाहुः शरैः शीघ्रमवाकिरत्॥ (भीष्म० ९४।१६) इत्यत्र पूर्वार्धगतस्य समार्पयच्छब्दस्योत्तरार्द्धगतेनावाकिरच्छब्देनानुवाददर्शनात्। इदमपरमत्र द्रढीयो मानम्—अलातचक्रवद्राजन् शरजालैः समार्पयदिति भारते (आश्व० ७७।३०)। अत्रालातचक्रोपमानेन कविधृतेन समर्पयतेराच्छादनमेवार्थ इति दृढं व्यवसितं भवति। अलातचक्रं नाम वेष्टयति न तु विध्यतीति सुविदितोऽर्थः।

विनाऽपि समं केवलस्याप्यर्पयतेः प्रयोगे सहार्थे तृतीया दृश्यते। तद्यथा—स शरैरर्पितः क्रुद्धः सर्वगात्रेषु राघव इति (रा० ३।२८।१९)। द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् इति च (रा० ४।१।८)। पुष्पैर्युक्तमित्यर्थः। भारतेऽपि नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्पयत् इति (कर्ण० ४८।३४)। कारकत्वाविवक्षायां तु षष्ठ्यपि दृश्यते—मातः, मार्गलग्नं कस्य समर्पयामि गृहमयूरकम् इति श्रीहर्षचरिते (पृष्ठे १६४)।

## पद्यतेः प्रयोगे विभक्तिवैचित्र्यम्

इदं चान्यदप्येतज्जातीयकं परीक्ष्यमाणं भूयसे विनोदाय भविष्यति विदाम्। पद गताविति धातोः प्रतिपूर्वस्य ण्यधिकस्य प्रयोगेऽपि विभक्तिवैचित्र्यं दृश्यत आकूतकरम्। हेतौ प्रतिपादयतेः प्रापणमर्थो मुख्यया वृत्त्येति गत्यर्थत्वादणि कर्तुः कर्मत्वे ब्राह्मणानिति वक्ष्यमाणपद्ये कर्मणि द्वितीया नापूर्वा। सर्वरत्नानि राजा यथार्हं प्रतिपादयेत्। ब्राह्मणान् वेदविदुषो यज्ञार्थं चैव दक्षिणाम्। इति (मनौ० ११।४)। अयशो जीवलोके च त्वयाऽहं प्रतिपादितः (रा० २।७४।६)। अत्र क्तेनोक्ते कर्मणि प्रथमा। एतां मालां च तारां च कपि-

राज्यं च शाश्वतम् । सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥ इति च (रा० ६।२८।३२)। अत्रापि पूर्ववत्कर्मणि प्रथमेति विज्ञेयम्। सत्कृत्य चैनं प्रीतात्मा राज्यार्धं प्रत्यपादयत् इति भारते (आदि० १६८।७२)। प्रतिपादनं वितरणमित्यर्थग्रहात्प्रतिपादयतिप्रयोगे विप्रादीनां सम्प्रदानताऽपि शिष्टानामिष्टा। गुणवते कन्या प्रतिपादनीयेति शाकुन्तले। अर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् इति च भर्तृहरौ (२।१६)। युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादितेति भारते (आदि० १३८।७७)। प्रतिपादयतिश्च कथं वितरणमर्थमवतरतीति जिज्ञासायामर्पयतिविषये यदुक्तं पुरस्तात्तदिहाप्यवितथं विज्ञेयम्। क्वचिदन्यत्र सप्तम्यपि दृश्यतेऽर्पयतिवत्। धनानि तु यथाशक्ति विप्रेषु प्रतिपादयेत् इति मनौ (११।६)। तत्र यद्रिक्थजातं स्यात्तत्तस्मिन्प्रतिपादयेद् इति च (९।१९०)। अत्रार्पयतिवत्सामीपिकेऽधिकरणे सप्तमी साध्वी। अपि वा सम्प्रदानेऽपि क्वचित्सप्तमीमिच्छन्ति शिष्टा इत्यदुष्टा।

## अस्थाने पञ्चम्याः प्रयोगः

केचिद् व्याकरणं प्राधीता[१] यस्य सकाशात्किञ्चिच्छ्रूयते ज्ञायते वा तमपादानमिच्छन्ति पञ्चमीं च ततो व्यवहरन्ति। तद्भ्रमसात्। उपयोगे नियमपूर्वके विद्याग्रहणे सत्येवाख्यातुरुपदेष्टुरपादानता भवति न त्वन्यत्र। अन्यत्र तु षष्ठीमेव प्रयुञ्जते शिष्टाः। तद्यथा—राजा देवत्वमापन्नो भरतस्य यथाश्रुतम् इति श्रीरामायणे (३।६६।४)। रामस्तस्य तु विज्ञाय सीतासक्तां प्रियां कथाम् इति (३।६७।२१)। अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य हेति (६।१८।१)। निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदाद्भुतोपमम् (६।१२५।४६) इति च। राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः। इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति इति च भारते (वन० ३०।८॥)॥ विचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तदिति च (आदि० २००।१८)। सर्वं शृणुत तं विप्राः सर्वं कीर्तयतो ममेति (मनु० ३।३६)। दिवौकसां कथयतामृषिभिर्वै श्रुता कथा। कामव्यसनसंयुक्ता पौराणी शशिनं प्रति॥ इति चरके (चिकित्सा० ८।३)। इदानीमहमागन्तुकानां श्रुत्वा पुरुषविशेषकौतूहलेनागतोऽस्मीमामुज्जयिनीम् इति चारुदत्ते (अङ्के २)। वेदे खल्वपि—इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे (शुक्लयजु० ४०।१०)। कारकत्वविवक्षायां तु ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति माम् (व्यासोक्तिः)। इत्यत्र श्रुवः कर्मणि द्वितीया।

---

१. अध्येतुमारब्धाः। आदिकर्मणि क्तः।

# शेषे षष्ठी

क्वचित्कारकस्याविवक्षा सम्बन्धस्य चैव विवक्षा। त्वया तु मम न श्रुतम् (भा० आदि० १५७।२६)। यथा वा मातुः स्मरतीति। मातृसम्बन्धिस्नेहादिकं स्मरतीत्यर्थः। यदा कश्चिन्मातृविश्लेषदुःखमश्नुवानः शिशुमपरं वाऽम्बया सस्नेहातिरेकं लाल्यमानं सदयं वाऽवेक्ष्यमाणमालोकते तदा मय्यप्यम्बैवमाचरदिति भवति तस्य मातुः स्मरणम्। यदा चाऽकृत्या संवादिनीं योषां रथ्यया यान्तीं निशाम्य सादृश्यप्रत्ययेन प्रतिबुद्धसंस्कारो मातरमेव स्मरति साक्षात्, मातृमूर्तिरेवास्योपतिष्ठते चेतसि, तदा भवत्येव कर्मकारकस्यावकाशः। एवमन्यत्रापि। शुकनासस्यापि मनोरमायां तनयो जातः। अन्यत्र जनकस्य कर्तृत्वेऽपादानत्वे वा सत्यप्यत्र तदविवक्षायां कस्येत्याकाङ्क्षायां शेषे षष्ठी। एवमेव क्षेत्रमन्यस्याधिं कृत्वा किमपि गृहीत्वा पुनरप्यन्यस्याधाय किमपि गृह्णातीति मिताक्षरावाक्येऽधिकरणस्याविवक्षायां शेषे षष्ठी। प्रियः सुक्रतुप्रिय इन्द्रे मनायुः प्रियः सुप्रावीः प्रियो अस्य सोमी (ऋ० ४।२५।५)। अत्रैकत्राधिकरणविवक्षया सप्तमी श्रूयत इन्द्र इति, अपरत्र सम्बन्धमात्रविवक्षायामस्येति षष्ठी। व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च। व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः॥ इति काशिकायामुद्धारे व्याधयो व्यायामक्षुण्णगात्रस्य पुरुषस्य सन्निधिमपि नाधिगच्छन्ति, संस्पर्शनन्तु दूरापेतमिति विवक्षया शेषे षष्ठी। तुरीये तु चरणे कर्मविवक्षातो द्वितीया। प्रायेण नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः। मातॄणां च कनीयांस इत्यत्र रामायणीये (१।६१।१९) वाक्येऽप्येकत्राधिकरणविवक्षया सप्तमी, अपरत्र कारकत्वाविवक्षया षष्ठी।

प्रभ्वादीनां योगे चतुर्थी षष्ठी च दृश्येते। तत्रालमर्थे चतुर्थी, स्वाम्येऽधिकारे वा षष्ठीति विवेकः। प्रभवति मल्लो मल्लायेत्यत्रालमर्थे चतुर्थ्याः, प्रभवति स्वस्य कन्यकाजनस्य महाराज इत्यत्र मालतीमाधवे स्वाम्ये षष्ठ्या दर्शनात्। विधिरपि न येभ्यः प्रभवति इति भर्तृहरिप्रयोगे त्वलमर्थता कथञ्चित्समर्थनीया। स्वाम्ये सप्तम्यपि दृश्यते। प्रभवन्त्योऽपि हि भर्तृषु कारणकोपा मनस्विन्य इति मालविकायाम्। प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तत इत्यत्र मनुवाक्ये त्वलमर्थेऽपि षष्ठी। प्रभवत्यनुशासने देवी इति वेणीसंहारेऽलमर्थेऽपि सप्तमी। भारतेऽपि तत्रार्थे सप्तमी दृश्यते। तद्यथा—न हि तेजस्विनां शापास्तेजःसु प्रभवन्ति वै। इति (अनुशासने ८५।१५॥)।

फलानां सुहित इति करणे शेषविवक्षया षष्ठी। शेषविवक्षैव च नियता सुहितार्थयोगे करणस्येत्याहुरिति कामसूत्रटीकायां जगद्धरः। पूरणगुणसुहितार्थ-

सद्व्ययतव्यसमानाधिकरणेन (२।२।११) इति करणस्य शेषविवक्षायां लिङ्गमप्यस्ति। अत्र काश्चिद्दिश[1] उपन्यस्यन्ते—नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिरिति भारते (अनुशासन० ३८।२५॥)। अग्निस्तृप्यति नो काष्ठैर्नापगाभिर्महोदधिरिति तु क्वाचित्कः पाठ आगन्तुकोऽसम्प्रदाय इति वेद्यम्। वेदेऽपि करणाविवक्षायां षष्ठी दृश्यते—अनुकामं तर्पयेथामिन्द्रावरुण राय आ (ऋ० १।१७।३)। इन्द्र सोमस्य वृषभस्य तृप्णुहि (ऋ० २।१६।६) इति च। मन्दानः शिप्रयन्धसः (अथर्व० २०।५३।२)। मन्दानस्तृप्यन्निति यावत्। हिरण्यवर्णा अतृपं यदा वः। (३।१३।६) इति च। तृम्पन्तु होत्रा मध्व इति (७।१५) वाजसनेयके। वाग्देवी जुषाणा सोमस्य तृप्यतु इति च (८।३७)। सूत्रेष्वपि—अहरहर्नयमानो गामश्वं पुरुषं पशुम्। वैवस्वतो न तृप्यति सुराया इव दुर्मदी॥ (महाभाष्ये २।२।२९)। अतृप्तिश्चान्नस्य (आप० ध० २।१।३)। भारतेऽपि—चिरस्य दृष्ट्वा दाशार्हं राजानः सर्व एव ते। अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम्॥ (उद्योग० ९४।५१)। नाभुञ्जानो भक्ष्यभोज्यस्य तृप्येत् (२९।६) इति च। कामानामवितृप्तस्त्वं सृञ्जयेह मरिष्यसि इति चान्यत्र (द्रोण० ५५।३६)। गव्यस्य तृप्ता मांसस्येति (कर्ण० ४४।२७)। न हि तृप्तास्मि कामानां ज्येष्ठा मामनुमन्यताम् (आदि० १२५।२५)। अवितृप्तः सुगन्धस्य समन्ताद् व्यचरद्वनम् इति वामनपुराणे (२१।३२)। अतृप्तोऽस्म्यद्य कामानाम् इति च भागवते (९।१८।३७)। मद्बाणानां तु वेगेन हतानां तु रणाजिरे। अद्य तृप्यन्तु मांसादाः (रा० ६।५७।१८–१९)। सदाङ्गारसुगन्धीनां फलानामाशिता इति च भट्टौ (७।३८)। आशितास्तृप्ता इत्यर्थः। अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारेति सन्देहभञ्जीहर्षोऽप्यत्रानुकूलः। माघस्तु अथवा श्रेयसि केन तृप्यत इति करणमवज्ञायाधिकरणत्वमाद्रियते। तदस्य स्वातन्त्र्यमिति किमु तत्र वक्तव्यम्।

पूर्णशब्दयोगे पूरयतेश्चापि प्रयोगे करणस्य शेषविवक्षा दृश्यते प्रायेण। तद्यथा—सम्पूर्णा कृतविद्यानां गुहा केसरिणामिव (रा० १।६।२१)। ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे (रा० २।९१।७३)। नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम् इति भागवते (१०।८।२०॥)। यथा क्षेत्रिकः केदारादपां पूर्णात्केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिनापकर्षत्यावरणं त्वासां भिनत्तीति योगभाष्ये (४।३)। स एष ह्रदः कामानां पूर्णो यन्मनः (जै०उ०ब्रा० १।५८।२)। तस्येयं पृथ्वी सर्वा वित्तस्य पूर्णा स्यात् (तै० उ० २।८)।

१. दिश उदाहरणानि।

वक्रमस्पूर्यतेऽश्रूणाम् (सुश्रुते १।११४।१६)।
दूर्वासर्षपपुष्पाणां दत्त्वार्घं पूर्णमञ्जलिम् (रा० ९।२८०)।



अपामञ्जली पूरयित्वा ( आश्व० गृ० १।२० )। पूर्णं रक्तासवानां यममहिष-महाशृङ्गमादाय पतगाविति ( यो० वा० उ० ८१।१०२ )। दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत् पदा ( मनौ ११।१८३ )। चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ( ६।७६ ) इति च। नवं शरावं सलिलस्य पूर्णमिति कौटलीयेऽर्थशास्त्रे ( १०।३१ )। ओदनस्य पूर्णाश्छात्राः[1] विकुर्वत इति सूत्रे ( १।२।३५ ) काशिकायाम्। स्निग्धद्रवपेशलानामन्नविशेषाणां भिक्षाभाजनं परिपूर्णं कृत्वेति तन्त्राख्यायिकायाम् ( मित्रसम्० कथा० १ )। तं च खादिराणामश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत् इति च चरके ( सूत्र० १४।४६ )। तुषाणां स्थालीं पूरयित्वेति ( आप० श्रौ० ८।२।८।१२ )। आसेचनवन्ति पयसः पूरयतीति ( का० श्रौ० २६।७।३२ )। पूर्णा वासेन तिष्ठन्तेति ( ७।६२।२ ) शौनकीयाः पठन्ति, पूर्णा वासस्य तिष्ठन्तेति पैप्पलादाः। सोऽयं शाखाभेदे पाठभेदः पूर्ण-शब्दविषये प्रायिकतां षष्ठ्या वक्तीति नितान्तमुत्तानम्। शौद्धिकं दधिमधुघृतजला-क्षतानां नवं पात्रं पूरयित्वेति च शङ्खलिखितस्मरणम्। ऋक्षु खल्वपि—पूर्णं आहावो मदिरस्य मध्वः ( १०।११२।६ )।

भरितशब्दयोगेपि षष्ठी दृश्यते भारते। तद्यथा—सन्ति निष्कसहस्रस्य भाण्डिन्यो[2] भरिताः शुभाः। इति ( सभा० ६०।२ )। पूर्णार्थकवर्धितशब्दप्रयो-गेऽपि षष्ठीं प्रयुञ्जते मन्वादयः स्मर्तारः—पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्धितम् ( मनु० ३।२२४ )।

## उपपदविरहेपि तद्योगशिष्टा विभक्तिः

तैस्तैरुपपदैर्योगे तास्ता विभक्तीरनुशास्ति शास्त्रकारः। अन्तरेणाप्युपपदं सा सा दृश्यते। त इमे कालपूगस्य महतोस्मानुपागताः ( भा० सभा० ३५।२४ )। कस्यचित्त्वथ कालस्य, ततः कतिपयाहस्य, तच्छ्रुत्वेत्यत्र भारते ( वन० २५९।८, २६०।१५, उद्योग० १८९।१८ )। अथ दीर्घस्य कालस्य ( आदि० १५।५ )। चिरस्य वाच्यं न गतः प्रजापतिः। भगवन्निमामाज्ञाकरीं वो गान्धर्वेण विवाह-विधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीताम् इत्यादौ शाकुन्तले च पश्चा-दित्युपपदं परिहृतम्। एति जीवन्तमानन्दो नरं वर्षशतादपीति रामायणप्रयोगे प्यूर्ध्वमित्याद्युपपदमपेक्षितं सदप्युपेक्षितम्। परं नैष उपपदपरिहारोऽन्यत्रापि

१. पूर्णाः सुहिता इत्यर्थ इति न्यासः।
२. कुण्डिन इति पाठान्तरम्।

पुत्रादनन्तरं शिष्य इति ... (... ५०।२९)।



शक्योऽतिदेष्टुम्। अत्र विषये भगवतः सूत्रकारस्य स्वं वचः प्रमाणं प्रथमम्—स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्। अत्र प्राक् उपपदं नोपात्तम्[1]।

क्वचिच्चोपपदयोगे विभक्तिनियमो व्यवहारत एवावसेयो भवति न शास्त्रतः। अनन्तरशब्दयोगे षष्ठ्यपि दृश्यते पञ्चमी चापि। सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्। सुखदुःखे मनुष्याणां चक्रवत् परिवर्ततः (भा० शां० (२५।२३)॥ सर्गशेषप्रणयाद्विश्वयोनेरनन्तरम् इत्यत्र कुमारे(६।९)ऽनन्तरशब्दयोगे विश्वयोनेरिति सम्बन्धमात्रे षष्ठी। तस्यानन्तरमिति भाष्ये दर्शनात्। अन्यत्रापादानत्वविरहेपि पञ्चमी यथा—नीलादनन्तरश्चैवधृष्टकेतुर्महाबलः (भा० भीष्म० ५६।१३)। तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्ट इति प्रथमसूत्रे शाबरभाष्ये दर्शनात्। अथातो धर्मजिज्ञासा वेदाध्ययनादनन्तरमित्याचार्याः। कविः कालिदासोपिपु राणपत्त्रापगमादनन्तरमिति।

अन्तरन्तराभ्यन्तरमध्यैर्योगे प्रायेण सप्तमी दृश्यते। यथा—उत्क्षेपणादिषु गमनादीन्यन्तर्भवन्तीति पृथङ् नोक्तानि। अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमाना इति मुण्डकोपनिषदि। अभ्यन्तरोहं लोके न त्वहं लोक इति भाष्ये। गुणेषु मध्ये प्रसादो नाम गुणः सर्वस्य प्रियः। प्रभृतियोगे पञ्चमी दृश्यते। तत्र कार्तिक्याः प्रभृत्याग्रहायणी मास इति भाष्यकारप्रयोग एव मानम्। पुराशब्दयोगेपि व्यवहारे पञ्चमी दृश्यते। तद्यथा—गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा (याज्ञ० १।१०)॥

## भावलक्षणा सप्तमी

शास्त्रे येयं भावलक्षणेति विश्रूयते सप्तमी तत्राप्यस्ति वक्तव्यम्। तत्रावदधतां विपश्चितः। यस्य च भावेन भावलक्षणम् (२।३।३७) इति हि तत्र विधायकं शास्त्रम्। कोऽस्य विषयः। यदा निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालाया अपरस्याः क्रियायाः कालपरिच्छेदाय भवति सोऽस्य विषयः। क्रिया ह्यत्र लक्षणं क्रियान्तरस्य। लक्षणं चेहानुमापकं व्याप्तिग्राहकं लिङ्गं न गृह्यते यथा धूमोग्नेः, किन्तर्हि ज्ञापकमात्रमिति सर्वं भाष्यादौ स्पष्टम्। इदं तु न विस्पष्टं किं यस्यैकस्य क्रिया लक्षणं विवक्षिता तस्यैव क्रियान्तरं चेल्लक्ष्यं भवति, भवत्यनेन सूत्रेण तत्र सप्तम्युताहो नेति। नेत्याह मान्यः कोषकृच्छ्रीशिवराम आपटेः। इदमेव च सम्यग्दर्शनम्। पूर्वे सूरयस्त्वत्र न संशिश्यिरेऽतो नात्र निर्णयमूचिरे। भाषावृत्तिकारः पुरुषोत्तम एवैकः प्रकृतसूत्रं वर्णयन्स्माह—यस्य च क्रिययाऽन्यस्य क्रियान्तरं

१. वेदे खल्वपि—यतो न पुनरायाति शाश्वतीभ्यः समाभ्यः (अथर्व० ६।७५।२)। अत्रोर्ध्वपदपरिहारेपि समाभ्य इत्यत्र पञ्चमी।

लक्ष्यते ततः सप्तमी स्यादिति । ईदृश एव शिष्टव्यवहारः । शिष्टाश्च वाचि प्रमाणमिति तदनुग्रहलाभाय तदविरोधेन सूत्राणि व्याख्येयानि ।

अयमर्थः । यस्य कर्तुः कर्मणो वा क्रिया क्रियान्तरस्य लक्षणं भवति स चेत्कर्ता कर्म वा क्रियान्तराश्रयात्कर्तुः कर्मणो वा भिद्येत, तत्रैव सप्तमी स्यात्, अभेदे तु मा भूदिति । तेन शयानेन देवदत्तेन भुज्यते इत्यत्र न भवति । अत्र यद्यपि शयनं लक्षणं भोजनं च लक्ष्यं तथापि यः शयिता स एव भोक्तेति लक्ष्यलक्षकयोः क्रियाक्रियान्तरयोः कर्त्रभेद इति प्रकृतसूत्रस्याविषयः । हते दशास्ये विभीषणो लङ्काराज्येऽभिषिषिचे रामेणेत्यत्र कर्माश्रयया हननक्रियया विभीषणाभिषेचनक्रिया लक्ष्यते रामकर्तृकेति विषयोऽयं सूत्रस्य । अत एव 'ततस्तैस्तथाऽनुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोऽपि मुक्ताः' इति पञ्चतन्त्रे मित्रभेदपाठो न दुष्यति । क्रिया-क्रियान्तरयोरनुष्ठानमोचनयोर्लक्ष्यलक्षकयोर्भिद्येते आश्रयभूते कर्मणी । कर्त्रभेदस्त्वकिञ्चित्करः । न हि कर्तृसम्बन्धिनोः क्रिया-क्रियान्तरयोरत्र लक्ष्यलक्षकभावोऽभिप्रेतः । एवं कस्यचित्प्राथमकल्पिकस्य रामे वनं प्रतिष्ठमाने स पितुः प्रतिज्ञानमेव सनस्यकरोन्नान्यत्किञ्चिद् इत्यत्र सप्तमीप्रयोगं सूत्राशयविदो न सहन्ते बलवच्च गर्हन्ते । धृतराष्ट्रस्य विदिते पाण्डवा वञ्चिताः परैः इत्यत्र भारतप्रयोगे धृतराष्ट्रस्येति षष्ठी कथमिति चेदुच्यते—अत्र विदितमिति भावे क्तान्तम् । वेदनं विदितम् । धृतराष्ट्रस्येति तत्सम्बन्धे शैषिकी षष्ठी । विदिते इत्यधिकरणे सप्तमी ज्ञेया न भावलक्षण इति सर्वमवदातम् ।

## विभक्त्यन्तरचिन्ता

इयमपि द्वितीयाप्रयुक्तिश्चिन्त्यताम् । चतुर्दशीमष्टमीं वा रामं पश्यन्ति तापसा इति भारते । अथ कल्यमुत्थायेत्यादि च रामायणे । इहोभयत्राप्यत्यन्तसंयोगोऽसन्नपि विवक्ष्यतेऽन्यथा द्वितीयानुपपत्तिः स्फुटैव । यद्यपि चतुर्दश्या अष्टम्याश्चैकदेशे तापसा रामं पश्यन्ति न तु सर्वरात्रम्, दर्शनं हि क्षणिकं भवति, तथापि रामदर्शन-समुत्सुकास्तापसाः सर्वां रात्रिं पश्यन्तीव रामम् । एवं ह्यासेचनकं पावनं च तद्रूपमिति विवक्षया तथा प्रयुङ्क्ते कविः । एवं दर्शनक्रियया रात्रेः कालस्याभिव्याप्तिर्व्याख्याता भवति । द्वितीयस्मिन्नपि प्रयोग उत्थानपूर्विकया चेष्टया व्याप्तिर्विवक्ष्यते सर्वस्य कल्यस्येति द्वितीया सुवचा । क्रियाश्चान्तर्णीतक्रियान्तरा अपि प्रयुज्यन्त इति धातूनां सकर्मकाकर्मकत्वप्रकरण इहैवोक्तमधस्तात् । एवं ततो द्वादश वर्षाणि प्रवेष्टव्यं वने पुनरिति भारतप्रयोगे प्रवेशनक्रियया तत्पूर्विका वासक्रियाऽभिधीयते । अन्यथा प्रवेशनस्य क्षणिकत्वात्कथङ्कारं तेन

द्वादश समा व्याप्येरन्, अव्याप्तेश्च कथं नाम वर्षशब्दादत्यन्तसंयोगे विहिता द्वितीयोपपत्तिमती स्यात्। एवमन्यत्रापि भारते—आत्मनो हि वयं दोषाद् विनष्टाः शाश्वतीः समाः (शां० ७।३२) इत्यत्र नाशलक्षणायाः क्रियायाः क्षणिकत्वेपि तद्विशिष्टाया अवस्थाया अभिधानादस्ति तया शाश्वतीनां समानामभिव्याप्तिरित्यत्यन्तसंयोगे द्वितीया सूपपन्ना भवति। एवमादिविषये चतुर्थी प्रयुञ्जानो बाढं भवत्यपशब्दभागिति शश्वत्स्मार्यम्। इहोदाहरणेषु कथंचिद्द्वितीयानिर्वाहेपीमासु दिक्ष्वन्यसंयोगस्यात्यन्तमसत्त्वाद्द्वितीयाप्रयुक्तिः सर्वथा दुःसमाधानेति व्यवहारमात्रं तत्र शरणम्—ते प्रवृत्तिं पृच्छन्ति ममेमां व्युषितां (=व्युष्टा) निशाम् (भा० उद्योग० १९४।२)। इमां व्युषितां निशाम् इत्यत्र प्रभातकाल इत्याह। इमां तु रजनीं प्राप्तामप्रभातां सुदुर्मते। निहत्य पितरं··(भा० द्रोण० १६०।३६)॥ यावदियं रजनी प्रभाता भवति ततः प्रागित्यर्थः। अनतीतामिमां रात्रिं यदि त्वां वीरमानिनम्। न हन्यां नरके घोरे पतेयं वृष्णिपांसन (द्रोण० १५६।७–८)। अस्या वर्तमानाया रात्रेरत्ययादर्वागित्यर्थः। यदीमां रजनीं व्युष्टां न हि हन्मि पराण्रणे (शल्य० ३०।२१)। यावदियं रजनी व्युच्छति तावत्। श्वोभूत इत्यर्थः।

अयमपि सप्तमीप्रयोगः परीक्ष्यः परीक्षकैः—एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुकेति भारते (वन० ६७।७)। नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं चरेदिति मनौ (२-२४२)। याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामेति मेघे। अस्ति मे त्वयि प्रार्थनेति चान्यत्र भारते। अत्र सर्वत्र सामीपिकेधिकरणे सप्तमी बोध्या। सप्तम्यैव च शिष्टा एतमर्थमभिदधति। तदेषां शीलम्। नव्यास्तु यदि पथि विपथे वा वर्तयामः स पन्था इत्यभिमन्यमाना मत्पार्श्वे वस, गुरोः सन्निधौ वसति, अस्ति मे त्वत्तः प्रार्थनेत्येवं विवक्षितमर्थमर्पयन्ति। यद्यपि पार्श्वादिप्रयोगे कश्चिद्दोषो न, गुणोपि सुतरां न। अधिकपदत्वं तु भवति, स रुचिविषयः शारदानामेव न विशारदानाम्।

अयमपि तृतीयाव्यवहारोऽनुचिन्त्यताम्—निमन्त्रयामास तदा फलमूलाशनादिभिः (भारते वन० २७८।३३)। भरतं केकयीपुत्रमातिथ्येन न्यमन्त्रयत (रा० २।९१।१)। स्थानिनो देवाः स्थानैरुपनिमन्त्र्यन्ते भो इहास्यताम् इह रम्यतामिति (योगभा० ३।५१)। लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा (रघौ १२।१५)। अत्र सर्वत्र तादर्थ्ये सत्यपि हेतुतृतीयां प्रयुञ्जते शिष्टा न चतुर्थीम्। तेन भोजनेन निमन्त्रयते विप्रमिति वक्तव्यं न तु भोजनायेति।

इदं चेह मीमांस्यं किं शक्यं नाम ब्राह्मणेभ्यो ब्राह्मणान्वा भोजनं परिविविष्टे परिवेषयति वेति वक्तुम्। नेत्याह। यतः परिवेषणं समर्पणं निवेदनं वेत्यनेन

समानार्थकं स्यात् स्यात्तत्र चतुर्थीप्रक्लृप्तिः। न च परिवेषयतीत्यस्याभ्यवहारयतीत्यर्थो यद् भोजनमिति कर्मणि द्वितीया साध्वी स्यात्। तत् किं नाम परिवेषणं भवति? व्याप्तिः। भोजना त्वार्थिकी। परिपूर्वो विष्लृधातुः स्वार्थमजहदेव भोजनामाह। सा किल व्याप्तिर्भोजनार्था भवतीति परिवेषणं भोजनेत्युपचारः। केन चात्र व्याप्तिरभिप्रेयते। अन्नेन भोजनेन वा। यो नाम भोजयितुमिष्टः स परिविष्यते। तेन ब्राह्मणान्भोजनेन परिवेविष्टे (परिवेषयति) इत्येव शिष्टजुष्टः प्रकारः। प्रकारान्तरं तु दुरुपपादमव्यवहृतपूर्वं चेति परिहेयम्। प्रकृते प्रकारे भारतं प्रमाणम्। तथा च ब्राह्मणान्परिवेष्टुमिच्छामीति (आदिपर्वणि ३।९७)। पूर्णे शतसाहस्रे विप्राणां परिविष्यताम् (=परिविष्यमाणानाम्) इति च (सभा० ४९।३१) प्रयोगः। सूत्राणि खल्वपीमं व्यवहारं प्रमाणयन्ति। एवं ह्यग्निवेशसूत्रे (१।१) स्मर्यते—आपूर्यमाणपक्षे पुष्ये नक्षत्रे विशेषेण पुंनामधेये युग्मान्ब्राह्मणानन्नेन परिविष्येत्यादि। असकृदावृत्तश्चैष ब्राह्मणानित्यादिः पाठःसूत्र इत्यस्य यादृच्छिकत्वं वारयति, अपपाठकल्पनां च व्यपोहति। ब्राह्मणानन्नेन परिवेषयेद् इति भारद्वाजगृह्यसूत्रे (१।६॥) चापि। यद्वा अतिथिपतिरतिथीन्परिविष्येति च शौनकसंहितायाम् (९।६।५३)।

इदमपरविधं विमृश्यम्। 'तीन दिन से मेह बरस रहा है' अस्य वाक्यस्य किमात्मकं संस्कृतमिष्यते। (अद्य) त्रीणि वासराणि वर्षति देव इत्येवास्य संस्कृतं शिष्टजुष्टं विभावयामः। अत्रार्थे पञ्च वर्षाण्यहं वीरं सत्यसन्धं धनञ्जयम्। यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर॥ इति भारते (वन० १४१।७)। इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् (१३।७६) इति रघुवंशे। दश वर्षाणि सततमयं नः शास्ति भार्गवः (४।५।११) इति देवीभागवते। भयाद्यस्य महाबाहो न शेते बहुलाः समा इति च भारते (द्रोण० १३१।६॥)। स विगाढरसो विलासिनां परिहासः स्मरणीयतां गतः। पुरिं नः परमेधतेऽधुना गणरात्रं परिदेवितध्वनिः॥ इति चाभिनन्दकृते रामचरिते (३३।२०)। अत्र गणरात्रमित्यत्यन्तसंयोगे द्वितीया। इत्यादिषु रचनासंवादात्। अद्य कतिपयान्यहानि नैवागच्छति, अद्य बहूनि दिनानि नावर्तते इति च उभयाभिसारिकायां धूर्त्तविटसंवादे च सन्निवेशसादृश्याच्च। प्रकृते वासराणीत्यत्र द्वितीयाऽत्यन्तसंयोगे। कालो ह्यत्र वर्तमानकालिक्या क्रियया साकल्येनाभिव्याप्त इति तदुपपत्तिः। नायमर्थो विभक्त्यन्तरेण शक्यो वक्तुमिति न तिरोहितं सताम्। वाक्यभेदेन त्वयमर्थः प्रकान्तरेणापि शक्यो वक्तुम्—अद्य (इदम्, इत इति वा) तृतीयं वासरं यद्वर्षति देवः। अत्रार्थे प्रमाणमप्युपस्तम्भकमस्ति। चतुर्दशमिदं वर्षं यन्नापश्यमरिन्दम इति भारते (उद्योग०

१. यमोऽपरिवेषणे इति गणसूत्र व्याख्यायां परिवेषण भोजनेति दीक्षितः। स आर्थिकोऽर्थ इति वेद्यम्।

एकादशं वर्षमिदं वसाम: (भा० वन०१७६।८)।



९०।७०)। इतश्चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम् इति च ( उद्योग० ९०।४७)। संवत्सरः किञ्चिदूनो न निष्क्रान्ताहमाश्रमात् (भा० वन० २९६ २६)। केचिदुक्तेर्थेऽद्य त्रीणि वासराणि वर्षतो देवस्येति संस्कृतं साधु पश्यन्ति। तन्न। अत्रानुकृतौ कालः प्रधानं क्रिया चोपसर्जनम्। वर्षणं हि कृत्प्रत्ययेन शत्रा कालसम्बन्धितयोक्तमिति व्यक्तमप्रधानम्। मूलहिन्दीवाक्ये तु विपर्ययेणार्थोपन्यास इति मूलच्छाययोर्बिम्बप्रतिबिम्बभावो नास्ति।

इदं चापरमेतज्जातीयकं विवेच्यम्। ( आज से ) छः मास पूर्व एक भीषण भूकम्प आया, महमूद ने भारतवर्ष पर सहस्र वर्ष पूर्व आक्रमण किया, तथा दो सप्ताह पूर्व मुसलाधार वृष्टि हुई—इत्यमीषां वाक्यानां किंरूपेणाञ्जसेन संस्कृतेन भवितव्यमिति। केचिदिमानीत्थं परिवर्तयन्ति संस्कृतेन—इतः षण्मासान्पूर्वं बलवद्भूरकम्पत, इतो वर्षसहस्रंपूर्वं महमूदो भारतभुवमाचक्राम, इतः सप्ताहद्वयं पूर्वं धारासारैरवर्षद् देव इति। अपरे इतः षड्भ्यो मासेभ्यः पूर्वं बलवद्भूरकम्पत, इतो वर्षसहस्रात्पूर्वं महमूदो भारतभुवमाचक्राम, इतः सप्ताहद्वयात्पूर्वं धारासारैरवर्षद् देव इति। इतरे च षण्मासा अतीता यदा बलवद्भूरकम्पत, वर्षसहस्रमतिक्रान्तं यदा महमूदो भारतभुवमाचक्राम, सप्ताहद्वयं गतं यदा धारासारैरवर्षद् देव इत्येवमुक्तमर्थमनुवदन्ति। सर्वोऽयं प्रकारो दुष्ट इति नाभिनन्दनीयो विदुषामिति सङ्ग्रहेणोपपादयामः। प्रकारत्रितये प्रथमः प्रकारस्त्वापाततोप्यरम्यः सुतराञ्च जघन्यः। इह षण्मासान् इत्यादिषु यथा द्वितीयाऽनन्वयिनी तथा प्रथमापि। द्वितीया ह्यत्यन्तसंयोगे विहिता। अत्यन्तसंयोगश्चात्र नेष्टः। तेन कुतोत्र द्वितीया सूपपादा स्यात्। सर्वथाऽनन्वितं पदकदम्बकमिहोपन्यस्तमिति वाक्यमपि न भवति। मूलानुकारिता तु दूरोत्सारिता। द्वितीयस्मिन्प्रकारे इतः षण्मासात् ( षड्भ्यो मासेभ्यः ) पूर्वमित्यादि सर्वथा संस्कारवत्तथापि विवक्षितमर्थं नार्पयतीति नैषाऽनुकृतिरनवद्या भवति। इदमत्रावद्यम्। मूले समयस्यैकोऽवधिरभिप्रेतः, संस्कृतच्छायायां त्ववधिद्वयं व्यक्तमुदितं भवति। द्विःपञ्चमीप्रयोगात्। यश्च क्रियाविशेषाभिव्यासः कालोऽत्यगान्नासौ परिच्छिन्नः। अत्र वाक्येषु त्विदमादिरर्थः[१] प्रतीतिं याति। भूकम्पादिव्यतिकरो नामाऽयं मासषट्कादिकालात्यये नाभूदिति। ततः पूर्वं कदाऽभूदिति न सुज्ञानमस्ति। वक्तुश्च नैषा विवक्षेत्ययमपि प्रकारो हेयः।[२] तृतीयस्मिन्प्रकारेपि दोषं विभावयामः। अत्र पूर्वत्र वाक्ये कालात्ययो निर्दिष्टः।

१. अयमादिरस्य इति इदमादिः। आदिशब्दः प्रकारे।

२. इममेव प्रकारमसाम्प्रतं साम्प्रतिका आ कन्यान्तरीपादा च काश्मीरेभ्यो वर्तमाना विपश्चितो जुषन्ते न च प्रत्यवायमीक्षन्त इति विस्मयसध्रीचीनो नः खेदः।

स किमवधिकः किंक्रियापेक्ष इति च नोक्तम् । यत्तदोर्नित्यसम्बन्धात्तदेत्यध्याहार्यं भवति । उत्तरत्र च क्रियोक्ता स्वातन्त्र्येण, न तु पूर्ववाक्यगतकालावधित्वेन । तेनोभयोर्वाक्यार्थयोरवध्यवधिमद्भावो नावगतो भवति । स च मूलवाक्येऽभिसन्धित्सितो वक्त्रेति दूरं सान्तरे छाया च मूलं चेति न दुरवधारं सुधीभिः ।

तेनापहाय दुष्टमेतत्प्रकारत्रितयं निर्दुष्टमिदं प्रकारद्वयं परिगृह्णन्तु सन्तः । (१) अद्य षण्मासा भुवः कम्पितायाः । अद्य वर्षसहस्रं महमूदस्य भारतभुवमाक्रान्तवतः । अद्य सप्ताहद्वयं धारासारैर्वृष्टस्य देवस्य । (२) इतः षट्सु मासेषु ( षष्ठे मासे ) बलवद् भूरकम्पत । इतो वर्षसहस्रे ( सहस्रतमे वर्षे ) महमूदो भारतभुवमाचक्राम । इतः सप्ताहद्वये ( चतुर्दशेऽहनि ) धारासारैरवर्षद् देव इति । अत्र प्रथमे प्रकारे षण्मासाः, वर्षसहस्रम्, सप्ताहद्वयमित्यतीतं कालं परिच्छिन्दन्ति । तत्र च सर्वत्रातीताः सन्तीत्यादेः क्रियाया गम्यमानायाः कर्तृतया प्रथमान्तानीमानि निर्दिष्टानि । भुव इत्यादौ षष्ठी शैषिकी । अयं च प्रकारः समा द्वादश तस्येह वेदानभ्यस्यतो मुनेः इति भारते ( सभा० ) प्रयोगेण समर्थनां लभते । द्वितीयस्मिन्प्रकारे इत इति पञ्चम्यर्थे तसिप्रत्ययान्तम् । पञ्चमी च यतश्चाध्वकालनिर्माणं तत्र पञ्चमीति वार्तिकेन कालमाने विहिता । 'षट्सु मासेषु' इत्यादिषु 'षष्ठे मास' इत्यादिषु च सप्तमी तु कालात्सप्तमीति वचनानुसारिणी । इतः स्थानेऽद्येत्यपि प्रयुज्यते । तत्र चायमस्मादह्न इत्यर्थमाचष्टेऽधिकरणवृत्तिरपि । तथा च कवेः प्रयोगः—अद्य प्रभृत्यवनताङ्गि तवास्मि दास इति । अयं च द्वितीयः प्रकारो भारतेनानुगृह्यते शाबरभाष्येण च । पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि ( आदि० १२६।२९ ) । प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः । तस्मादितो वर्षशतेऽप्यस्यार्थस्य सम्बन्ध आसीदेव । ततः परेण ततश्च परतरेणेत्यनादिता इति शाबरभाष्ये । श्रीरामायणेऽप्यस्य व्यवहारस्यानुग्राहकं वचो दृश्यते—मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनीति ( ६।६०।१७ ) ।

## प्रकारद्वयस्य विषयप्रविवेकः

इदं चात्र सम्प्रधार्यम् । किमेतौ प्रकारौ स्वच्छन्दतो यत्र तत्र शक्यावास्थातुमुत यथायथं प्रतिनियतविषयाविति । बाढं प्रतिनियतविषयाविति ब्रूमः । प्रथमः प्रकारस्तु क्वचिदेव सङ्गतः स्यात् । तत्र हि कालविशेषस्यातिक्रान्तस्य विशेषणीभूता क्रिया कृत्प्रत्ययान्तेन षष्ठ्यन्तेनोच्यत इति कालापेक्षया प्रव्यक्ता तस्या गौणता । तस्माद्यत्रैवंविधः क्रियाकालयोर्गुणप्रधानभावोऽभिप्रेयते तत्रैवैष प्रकार औपयिको नेतरत्र । यत्र तु क्रिया प्राधान्येन विवक्ष्यते तिङा चोच्यते तत्र कालनिर्देशः सप्तम्यैव युक्त इति द्वितीय एव प्रकारस्तत्र युक्तरूप इति पश्यामः ।

## प्रकारान्तरसंभवः

इतो व्यतिरिक्तमपि प्रकारान्तरं संभवति। इतः षड्भिर्मासैः पूर्वं भूरकम्पत। इतो वर्षसहस्रेण पूर्वं महमूदो भारतभुवमाचक्राम। इतः सप्ताहद्वयेन पूर्वं धारासारैरवर्षद् देव इति। अत्र वाक्येषु षड्भिर्मासैरित्यादिषु या तृतीया सा कम्पनादिक्रियायाः पूर्वतामवच्छिनत्ति। मासपूर्वः, वर्षपूर्व इत्यादयः समासाः पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैरिति शास्त्रेणाभ्यनुज्ञायन्ते। समासविधानाच्च लिङ्गान्मासेन पूर्व इति वाक्येपि पूर्वशब्दयोगे तृतीया साध्वीत्यास्थीयते। तेन मत्तो नवभिर्मासैः पूर्वो देवदत्त इति दोषलेशैरस्पृष्टं वचः। इदमत्र तत्त्वम्। पूर्वशब्देन योगेऽस्मच्छब्दात्पञ्चमी, तेनैव च योगे मासशब्दात्तृतीया। अवध्यर्थे पञ्चमी, अवच्छेदे तृतीयेति विभक्तिभेदः। यदि मासेन पूर्व इति निरस्तसमस्तदोषः प्रकारस्तर्हि षड्भिर्मासैः पूर्वं भूरकम्पतेत्यादि वाक्यं कथं दोषास्पदं स्यात्। अत्र पूर्वमिति कम्पनक्रियां विशिनष्टि मासैरिति च पूर्वतां क्रियाया अवच्छिनत्ति। नात्र दोषस्तोकं विभावयामः। अप्रहत एष वाचां पन्था इति न शिष्यान्परिग्राहयामः। सर्वथा निरवद्योप्ययं प्रकारो न तावत् प्रमाणकोटिं निविशते यावन्न शिष्टप्रयोगैः समर्थनां लभते।

इत्यवसितः कारकविचारः।

अयमपि शिष्टव्यवहारो विमृश्यताम्। तिङन्तेन समानप्रकृतिकं कर्म न प्रयुयुक्षन्ते प्रायेण यावन्न पदान्तरेण तद्विशेषयन्ति। अर्थपौनरुक्त्यात्। न हि शिष्टा वाचं ब्रवीति, शपथं शपते, भोजनं भुङ्क्ते, गीतं गायति, वर्षं वर्षति, संभारान् संबिभर्ति, फलानि फलतीत्यादि प्रयुञ्जते पुनरुक्तिदोषभयात्। सविशेषणत्वे तु रोचयन्ते प्रयोगम्—जीवत्वसुखजीविकाम् ( भा० वन० ६३।१७ )। इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर। मन्वादिभिर्महाराज तीर्थयात्रा भयावहा॥ (भा० वन० ९२।१०)। नादान्नदति चाद्भुतान् (१७८।२१) इति च। अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत्। कुर्यात् तृणमयं चापं शयीत मृगशायिकाम्॥ ( भा० आदि० १४०।१२ )। जहास स्तनवद् हासम् (भा० सभा० ४५।१७)। शुचिस्मितां वाचमवोचदच्युत इति माघे। शिवभक्तिरियं नो मनोरथदुर्लभानि फलानि फलतीति हर्षचरिते। वाङ्मयमधुवर्षमवर्षत् इत्यन्यत्र। पापान्संसृत्य संसारान् इति च (मनु० १२।७०)। अनित्यां वसतिं वसेत् इति वासिष्ठधर्मसूत्रे (१०।१२)। तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिरिति मनौ (७।८३॥)। अजिह्मामशठां शुद्धां जीवेद् ब्राह्मणजीविकाम् इति च (४।११)। मधुरं गायति गीतमित्यन्यत्र। क्वचित्तु विशेषणविरहेपि तथा प्रयुञ्जते—कच्चित्ते

मन्त्रितो मन्त्रो न राष्ट्रं परिधावतीत्यत्र (भा० सभा० ५।३०) यथा। तत्र धातुः क्रियासामान्ये भवतीति कल्प्यं भवति। एवमन्यत्रापि—स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा इति गीतासु (६।२३)। व्यूहौ च व्यूह्य संरब्धाः सम्प्रहृष्टाः प्रहारिण इति भारते (भीष्म० ६९।३)। उपधानं कुरुश्रेष्ठ फाल्गुनोपधत्स्व मे (भीष्म० १२०।४१) इति च। उक्तलक्षणं कर्तृपदं तु बाढमिच्छन्ति। चौरस्य रुजति रोगः। चौरस्यामयत्यामय इति च काशिकायाम् (२।३।५४)। यत्र क्रियामात्र उदिते कर्मणि चानुदितेऽर्थो न पूर्यते तत्रार्थवान् कर्मणः प्रयोग इति न वार्यते। को भवता दायो दत्तः। को भवता लाभो लब्ध इति।

इदं चापि व्यवहारानुबन्धि किञ्चिदवधानेनानुगृह्यताम्। यत्र खलु विशेषण-महिम्ना विशेष्यार्थलाभस्तत्र शक्यं विशेष्यमप्रयोक्तुम्। तद्यथा सागराम्बरेति समुद्रवसनामुर्वीमाह। विषाक्ते दिग्धलिप्तकावित्यमरात्केवलौ दिग्धलिप्तकशब्दौ विषसम्पृक्तशरवचनौ परिगृह्येते। भारते प्रयोगोपि दृश्यते—दिग्धहस्तं मृग इव स एनस्तस्य विन्दति (उद्योग० ३९।२७)। उष्णानि कृष्ण वर्तन्ते इति भारतप्रयोगेऽप्युष्णानीति निदाघाहा[1] उच्यन्ते। अजर्यं संगतमिति जीर्यतेर्नञ्पूर्वा-त्संगते संगमने कर्तरि यत्प्रत्ययो निपात्यते। अजर्यमार्यसंगतम्। परं केवलोऽप्य-जर्यशब्दस्तादृशे संगते प्रयुज्यते। मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धेति रघौ (१८।७)। क्वचिन्नाम्नापि केवलेन तत्कर्मिका क्रिया लक्ष्यते। नागपृष्ठेऽश्वपृष्ठे च परिनिष्ठित इत्यत्र नागपृष्ठारोहणेऽश्वपृष्ठारोहणे च परं प्रावीण्यमुपगत इत्यर्थोऽभिधित्सितः।

## उद्देश्यविधेयभावः

अवसितः कारकादिविचारः। इदानीं वाक्य उद्देश्यस्य कर्तृता वा स्याद्विधेयस्य वा। अपि वाऽन्यत्रार्थानुरोधात्किमुद्देश्यस्य कर्मत्वमिष्यतामुताहो विधेयस्येति विचारमवतारयामः। यद्युद्देश्यस्य कर्तृता तदा कर्तृवाचिनि तिङि धातोरुद्देश्यमनुसरन्ती पुरुषवचने भविष्यतः। अथ विधेयस्य कर्तृता तदा तदेव ते अनुरोत्स्यतः। एवमेकैकस्य कर्मत्वविवक्षायां तत्तदनुरोधात् धातोः पुरुषवचने, क्तान्तात्प्रातिपदिकाच्च लिङ्गसंख्याविभक्तयो भविष्यन्ति। अस्मिन् गालोडिते[2] प्रवृत्तानां वैदिकं लौकिकं च साहित्यं शीलयतां नः प्रायश उद्देश्यस्य कर्तृत्वाभि-प्रायाणि यथाविवक्षं कर्मत्वाधिगमकानि वा वाक्यानि दृक्पथमवतरन्ति। तानि

१. रात्राह्नाहाः पुंसीति पुंस्त्वम्।
२. गालोडितं वाचां विमर्शः।

*. नेभ्य: पर आदित्यस्तान्येतस्मिन्नेकं भवन्ति (नि० १०। २६।१२)।



स्थूलोच्चयेनोच्यन्ते—समुद्रः रथः कलशः सोमधानः ( ऋक् ६।६९।६ )। यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम्। स्युष्टे सत्या इहाशिषः ॥ ( ऋक् ८।४४।२३ )। यत्र ब्रह्म च क्षत्रं च उभे भवत ओदनः ( कठ उ० )। आत्मेत्येवोपासीत। अत्र सर्वं एकं भवन्ति ( बृहदारण्यके उ० १।४।७ )।*, ता यदा सहस्रं सम्पेदुः ( छां० उ० ४।४।५ )। सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् ( मनु० १२।२५ )। अत्र रजो रागद्वेषौ स्मृतम् इत्यत्रान्वये रागद्वेषाविति विधेयम्। स एते पञ्चपशवोऽभवत् ( श० ब्रा० ६।२।१।३ )। अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ( रघौ १।२५ )। कन्या शिखण्डिनी जाता पुरुषो वै निवेदिता ( भा० उद्योग० १९१।२ )। एषोऽस्मि कामन्दकी संवृत्तः ( मालती० )। पुरुषो ह नारायणोऽकामयत। अहमेवेदं सर्वं स्यामिति ( श० ब्रा० १३।६।१।१॥ )। ते ह व्याघ्रो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद् यद् भवन्ति तदाभवन्ति ( छां० उ० ६।९।२ )। बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डक इति हलायुधः। भारः स्याद् विंशतिस्तुला इत्यमरः। विवेकपादपस्यैव भोगमोक्षौ फले स्मृतौ इति च योगवासिष्ठे ( २।११।५८ )। शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवमिति विद्यानाथः। अत्रोदाहृतीनामियत्तापरिच्छेदो नास्ति।

उद्देश्यस्य कर्तृकर्मत्वे परिगृह्य प्रचुरं पुरा प्रयुञ्जते प्राज्ञाः। विधेयस्य कर्तृकर्मत्वपरिग्रहस्त्वल्पः क्वाचित्कः। बाढं प्रयस्यद्भिरस्माभिः कियन्तिचिदेवोदाहरणानि पारितानि पर्येषितुम्। तानीहानुक्रामामो विमर्शाय विपश्चिताम्। यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानत इति शुक्लयजुषि ( ४०।७ )। ते समानीतमात्रे तु शकले भरतर्षभ। एकमूर्त्तिधरो वीरः कुमारः समपद्यत ॥ इति भारते ( सभा १७।४१ )। त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यत इति, अन्नं प्रजापतिश्चोक्त इति, अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् इति च भारते ( वन० १८८।२३, २००।३८, शान्ति० ३३।३८ )। अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ( उद्योग० १५५।२७ ) इति च। त्रिंशत्कला मुहूर्तः स्यात्, पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः। ते षोडश स्याद्धरणम्, प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः। व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥ श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः, द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः। सप्त प्रकृतयो ह्येता सप्ताङ्गं राज्यमुच्यते इति भृगुप्रोक्तायां मनुसंहितायाम् ( १।६४, ८।१३८, ८।१३६, ६।७०, २।१०१, ८।१३५, ९।२९४ )। इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यत इति गीतासु ( ३।४० )। आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः। शरीरार्धं स्मृता नारी…

१. असाकल्येन।

(बृहस्पतिः)। विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः। सिद्धान्तश्चेति पञ्चैते शास्त्रेऽधिकरणं स्मृतम् ॥ ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः। त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ (मनु० २।८१)। एको भिक्षुर्यथोक्तस्तु द्वौ भिक्षू मिथुनं स्मृतम्। त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥ इति दक्षस्मृतौ (७।३४)। सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत इति पस्पशायां भाष्ये। द्वौ द्वौ माघादिमासौ स्यादृतुरित्यमरः। द्वौ द्वौ मासावृतुः स्मृत इति क्षीरस्वामिनोद्धृतं कात्यवचनम्। आचितो दशभाराः स्युरिति चामरः। पक्षसी तु स्मृतौ पक्षाविति पचिवचिभ्यां सुट् चेत्युणादिसूत्रव्याख्यायां दीक्षितोद्धृतः कोषः। भिन्नो भयाद्वा शोकाद्वा ध्वनिः काकुरुदाहृतेति श्रीहर्षचरिते प्रथमोच्छ्वासे शङ्करोद्धृतकोषः। अक्षरेभ्यः संस्कारः संस्कारादर्थप्रतिपत्तिरिति सम्भवत्यर्थप्रतिपत्तावक्षराणि निमित्तमिति शाबरभाष्ये (१।१।५)। मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमाविति रघौ (८।६१)। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्त इति काशिकायाम् (४।२।५५)। तत्र पूर्वं द्वे अक्षरे एकमक्षरं क्रियत इति क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत इति सूत्रव्याख्यायां वेदार्थदीपिकायां षड्गुरुशिष्यः। साक्षिणः साधनं प्रोक्तं दिव्यं न च लेख्यकमिति मिताक्षरायाम् (२।२२)। अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता। इति चरके (चिकि० १५।५३)। खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः। इति च (शारीर० १।१६)। कार्तिकस्य दिनान्यष्टावष्टावग्रहणस्य च। यमदंष्ट्रा समाख्याता अल्पाहारः स जीवति ॥ इति शार्ङ्गधरसंहितायाम् (१।२।२४)। कोषो दण्डो बलं चैव प्रभुशक्तिः प्रकीर्तिता। इति मिताक्षरायाम्। शब्दाः समानानुपूर्व्या यमकं कीर्तितं पुनः (विष्णुधर्म० पु० ३।१४।२)। एवमग्रेऽपि श्लोके कतिपयपदान्येव म्लेच्छभाषा भवति न सर्वः श्लोक इति भारतभावदीपे नीलकण्ठः। अतसतण्डुला धौताः परिमृष्टा घृतेन च। खण्डयुक्तेन दुग्धेन पाचिताः पायसं भवेत् ॥ इष्टापूर्तं द्विजातीनां सामान्यो धर्म उच्यते (लि० स्मृ० श्लोक ६)। यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिरिति (कूर्म० उत्तरा० ११।१६)। आहारमकरोद्राजा मूलानि च फलानि चेति (भा० आदि० २२३।२८)। ये स्राक्त्यं मणिं जना वर्माणि कृण्वत इति शौनकसंहितायाम् (८।५।७)। ननु यदि पदान्येव संहितानि वाक्यमुच्यत इत्युवटभाष्योपक्रमे। आपो ह श्लेष्म प्रथमं संबभूवेति (आप० श्रौ० ६।४।१४।७)।

अत्र दुष्करं व्यवस्थापयितुम्। एवं हि प्रतिभाति प्राय उद्देश्यविधेययोः प्राधान्याप्राधान्यविवक्षाया व्यवस्थितिर्नास्ति। तत्र खलु कामचारः प्रयोक्तॄणाम्।

एको दिवसः षष्टिनाड्यो भवन्ति।
एकं वर्षं द्वादश मासा भवन्ति।
दक्षिणा राजसूयस्य मेन निर्गमनं कृता (स्क० द० का०
४।१५।२४)।



यत्रोद्देश्यस्य प्राधान्यं विवक्षन्ति वाग्विदस्तत्र तस्य कर्तृकर्मत्वे भवतोऽन्यत्र विधेयस्य। वाक्ये विधेयस्य प्राधान्यं तावन्न्यायप्राप्तम्। यत्किञ्चिदुद्दिश्य यत्किमपि विधातुमेव तत्प्रणीतेः। वाक्यार्थः क्रियेति सा प्रधानं वाक्ये तदङ्गभूतं चान्यदपि तत्समकक्षमेव। तथापि न ह्युपपत्तिमान्सर्वः प्रयोगप्रकारः, रुचिवशश्चापि कश्चिद् भवति। उद्देश्यस्य प्राधान्यं प्रायेण रोचयन्ते शिष्टा इति किं कुर्मः। यदि तर्कयामहे यत्र हि विधेयं संज्ञा भवति (संज्ञि वा), यथाऽन्नं प्रजापतिश्चोक्तः, त्रिंशत्कला मुहूर्तः स्याद् इत्यादिषु, यत्र वाऽजहल्लिङ्गानि पदानि विधेयानि भवन्ति, यथा मिथुनं परिकल्पितं त्वयेत्यादिषु, तत्र विधेयस्य प्राधान्यं विवक्षन्ति तदनुरोधाच्च कर्तृकर्मत्वेन तत्प्रतीच्छन्तीति तदपि न व्यवतिष्ठते, तत्राप्युभयथा प्रयोगा दृश्यन्ते। भारः स्याद् विंशतिस्तुला इत्युद्देश्यस्य कर्तृत्वेऽमरप्रयोगः। आचितो दश भाराः स्युरिति च तस्यैव विधेयस्य कर्तृत्वे। प्राची बालविडाललोचनरुचां जाता च पात्रं ककुप् इत्यत्र बालरामायणे, हारः स एव प्राभृतमत्रजात इत्यत्र विद्धशालभञ्जिकायां चाजहल्लिङ्गपदोपात्ते विधेयेऽप्युद्देश्यस्य कर्तृत्वम्। तथापीदं व्यवसितं भाति पात्रप्रमाणभाजनस्थानास्पदादिषु विधेयेपूद्देश्यस्यैव कर्तृतेति। तेन वेदाः प्रमाणं सन्तीत्येव साधु, न तु वेदाः प्रमाणमस्तीति। एवं पात्रादिष्वपि बोध्यम्। इदं चाभासते क्वचित्क्रियापदस्य सान्निध्यमप्युद्देश्यविधेययोः कर्तृत्वकर्मत्वयोर्व्यवस्थापकं भवति। यथा 'एवमग्रेऽपि श्लोके कतिपयपदान्येव म्लेच्छभाषा भवति न सर्वः श्लोक' इति नीलकण्ठप्रयोगे म्लेच्छभाषेति विधेयं तिङन्तस्य संनिहितमिति तस्य कर्तृत्वम्। उद्देश्यं हि विधेयेन व्यवायात् ततो विप्रकृष्टमिति न तस्य तत्। यदि च विपर्ययेणोद्देश्यं तिङन्तादव्यवहितपूर्वं स्यात् तदा तस्यैव कर्तृत्वमभिमतं स्याद् वाक्यं चैवंविन्यासं स्यात्—म्लेच्छभाषा कतिपय-पदान्येव भवन्तीत्यादि। एवमपि संभवत्यर्थप्रतिपत्तावक्षराणि निमित्तम् इति शाबरभाष्ये संभवतीत्येकवचनं विरुध्येत। एतच्च दृढतरं प्रतिभाति यत्र विधेयं विकृतिवाचकं कृभ्वस्तीनां च प्रयोगः, च्वेश्चाप्रयोगस्तत्र विधेयस्यैव प्राधान्यविवक्षया कर्तृत्वकर्मत्वे व्यवस्थिते।[१] अत्र सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत इति भाष्यमेव लिङ्गम्। तत्र नागेशोक्तिरप्यस्मदुक्तस्योपस्तम्भिका-खदिराङ्गारसवर्णे कुण्डले भवत इति प्रयोगादच्व्यन्ते विकृतेः कर्तृत्वं बोध्यमिति। तथा चैतरेयब्राह्मणे तादृशे विषये विकृतेः कर्तृता दृश्यते—तेषां (देवानां) या एव घोरतमास्तन्व आसंस्ता

१. विकारो जन्मनः कर्ता प्रकृतिर्वेति संशये। भिद्यते प्रतिपत्तॄणां दर्शनं लिङ्गदर्शनैः॥ कल्पि सम्पद्यमाने या चतुर्थी सा विकारतः। सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम्॥ (वाक्य० ३।७।१४–१५)

एकधा समभरंस्ताः सम्भृता एव देवो (रुद्रो) भवत् इति (३।३३)। स उद्गाथोऽङ्गारा भवन्तीति चच्छान्दोग्योपनिषदि (२।१२।१)। यस्मिन्सर्वाणि भूतान्यात्मैवाभूद् विजानत इति यजुषि तु तात्त्विकस्य विकारस्याभावेऽपि विकार-विवक्षायामात्मनो विधेयस्य कर्तृत्वे व्याख्येयम्। परमयमप्युत्सर्गो नाऽनास्कन्नोऽ-पवादेन। स (प्रजापतिः) एते पञ्च पशवोऽभवदिति शतपथे (६।२।१।३), अत्र सर्वं एकं भवन्तीत्यत्रोपनिषत्प्रयोगे चोद्देश्यस्य कर्तृत्वदर्शनात्। तेनान्त-र्वाणयो निब्रुवन्तु किमत्र कामचार एवाभ्यनुज्ञात आहोस्विद् व्यवस्थितिरपि काचिदस्तीति।[१]

विधेयस्येतिना परिच्छेदे तस्यैव कर्तृत्वकर्मत्वे व्यवस्थिते इत्यपि न शक्यं मुक्तसंशयं वक्तुम्। कालादिकृता वस्तुधर्मा वयःप्रभृतयोऽवस्थेत्युच्यत इति ककुदस्यावस्थायां लोप इति सूत्रे काशिकायां विधेयस्य कर्मत्वमस्तीति नापह्नूयते। योगभाष्ये तूभयथा दृश्यते। तद्यथा—सर्वभूमिषु सर्वविषयेषु सर्वथैवाविदित-व्यभिचाराः सार्वभौमा महाव्रतमित्युच्यन्ते (२।३१)। एकविषयाणि त्रीणि साधनानि संयम इत्युच्यत इति च तत्रैव (३।४)। तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति संभाव्यत इति कुमारे (६।४१) मल्लिनाथः।

## उद्देश्यविधेयभावे लिङ्गविमर्शः

इदमिह प्रसङ्गाद् विमृश्यते—यत्र वाक्य उद्देश्यविधेययोरेकत्वमापादयन्ती द्वे सर्वनामनी प्रयुज्येते तत्र किं कस्य लिङ्गमुपादत्त इति। अत्राह तत्रभवान् कैयटः—उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति। क्षीरस्वामी खल्वपि स्माह—सर्वनाम्नामुद्दिश्यमानवि-धीयमानयोर्लिङ्गग्रहणे कामचार इति (अमरोद्घाटने)। यदि यच्छब्द उद्देश्यलिङ्गं गृह्णाति तदा तच्छब्द उद्देश्यलिङ्गमेव गृह्णीयाद् विधेयलिङ्गं वेति कामचारः। तथापि विधेयलिङ्गानुसरणं प्रायिकं पश्यामः। मायेत्सा ते यानि युद्धान्याहुरित्यृग्वर्णः (ऋ० १०।५४।२)। अधर्मः क्षत्रियस्यैष यद् व्याधिमरणं गृहे (भा० भीष्म० १७।११)। मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव सः (मनु० ९।१३१)। शैत्यं हि यत्सा प्रकृतिर्जलस्येति कालिदासः। तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जन इति भवभूतिः। छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्तिताः ( )। यान्यासामन्तरालानि विदिशः प्रदिशश्च ता इत्यमरमालायाम्। यदेते धनमित्याहुः

१. कश्चिदाह—विशेष्यवाचकपदसमानवचनकत्वमाख्यातस्येति तेन वृक्षः पञ्चनौका भवतीत्यादौ प्रकृतिविकृतिस्थलेऽथ एको द्वौ जायते इत्यादावुभयार्थाभेदारोपस्थले चाख्यातस्यैकवचनतोपपन्ना भवति।

प्राणा: ह्येते बहिश्चराः। तक्रेण पक्वं यत्क्षीरं सा भवेत् तक्रकूर्चिका। इह बहु शक्यमुदाहर्तुम्। परं क्वचित्तच्छब्द उद्देश्यलिङ्गमपि गृह्णाति। तद्यथा—शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यम इत्यमरः। सा वीराशंसनं युद्धभूमिर्यातिभयप्रदेति च सः। यदधमर्णेनोत्तमर्णाय मूलधनातिरिक्तं देयं तद् वृद्धिरिति काशिकायाम् (५।१।४७)। यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचर इति साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रः। यदावेद्यते राज्ञे तद् भापेत्यभिधीयत इति मिताक्षरा। तदनन्तरं गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिरिति न्यायमुक्तावल्यां विश्वनाथः। प्रणामादिभिराशिषं वाच्यमानो गुर्वादिर्यत्प्रतिसंभाषते तत्प्रत्यभिवाद इति लघुशब्देन्दुशेखरे स्वरसन्धौ नागेशः। क्वचिच्च यच्छब्दोऽपि विधेयलिङ्गमनुसरति। तद्यथा—श्लेष्म वा एतद्यज्ञस्य यद्दक्षिणा (ताण्ड्य ब्रा० १६।१।१३)। मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी पौर्णमासी (शाङ्खायन ब्रा० ५।१)। क्वचिद्यच्छब्दो नपुंसकं प्रयुज्यतेऽनपेक्ष्य विधेयलिङ्गम्। तद्यथा सैषाऽनस्तमिता देवता यद्वायुः (बृ० उ० १।५।२२)। इहोद्देश्यलिङ्गस्यापि नानुसारः। क्वचित्तु यच्छब्दोऽपि विधेयलिङ्गमनुविधत्ते वचनं च। तद्यथा प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ (मनु० ९।२२२)। इति कामचारः सुष्ठूपदर्शितो भवतीति विरम्यते।

## विशेषणविशेष्यभावः

उक्त उद्देश्यविधेयभावः। विशेषणविशेष्यभावः सम्प्रत्युपक्रम्यते। भेदकं विशेषणं भेद्यं विशेष्यमिति सामान्येन तयोर्लक्षणम्। यदनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थाप्यते तद् भेद्यम्। सर्वोऽर्थः स्वरूपेण सामान्यतो ज्ञातोऽपि स्वगतेन विशेषेण पुनरनिर्ज्ञातो भवति। तस्य च येन निर्ज्ञातस्वरूपेण गुणवचनादिना योगो भवति स्वस्य रूपस्य परिच्छेदाय तद्भेदकं विशेषणम्। तच्च परार्थमिति गौणं भवति। तथा चोक्तं वाक्यपदीये—

विशेष्यं स्यादनिर्ज्ञातं निर्ज्ञातोऽर्थो विशेषणम्।
परार्थत्वेन शेषत्वं सर्वेषामुपकारिणाम्॥ (३।१४।७) इति।

क्वचिद् विशेषणविशेष्ययोः कामचारः। यत्रोभावपि गुणशब्दौ वा क्रियाशब्दौ वा, गुणक्रियाशब्दौ वा तत्रैकतरं विशेषणं भवतीतरच्च विशेष्यम्। तथा च पर्यायेणोपसर्जनभावः। तद्यथा खञ्जकुब्जः। कुब्जखञ्जः। पाचकपाठकः। पाठकपाचकः। खञ्जपाचकः। पाचकखञ्ज इत्यादि।

विशेषणमप्रधानमित्युक्तम्। द्वयोरप्रधानयोः प्रधानापेक्षावतोर्नास्ति परस्परोपकारित्वमिति परस्परमनभिसम्बन्धः। उक्तं हि भाष्ये—न ह्युपाधेरुपाधिर्भवति

गुणानां परार्थत्वादसम्बन्धः समत्वात्स्यादिति च पारदर्शी सूत्रम्।



न वा विशेषणस्य विशेषणम् ( १।३।२ ) इति। यदि तयोरपि गुणप्रधानभावः स्यात् तदा विशेषणत्वं न स्यात्। तयोर्विशेष्ये द्रव्य एवैकस्मिन्नन्वयो न परस्परम्। तेनास्मद्गुरुचरणा महान्तो विद्वांस सन्तीत्यत्र महत्त्वेन विद्वत्त्वं न शक्यते विशेषयितुम्। महान्त इति च विद्वांस इति चोभयं गुरुचरणानामेव विशेषणम्। इष्यते च महत्त्वं विद्वत्त्वं विशिंष्यादिति। तेन नेदं विवक्षितमर्थमर्पयतीति दुष्टो न्यासः। एवं च एते एतावन्तः साधवो यद् द्विषत्यपि दयां कुर्वन्तीत्यपि विवक्षितार्थासमर्पणादप्रयोगः। तेनास्मद्गुरुचरणा महद्विद्वांस इति वक्तव्यम्। तत्र समासे व्यासे वा न कश्चिद् भेदः। उभयथा महदिति क्रियाविशेषणम्। सुप्सुपेति समासः। महद्यथा स्यात्तथेति विग्रहः। विस्पष्टपटुरितिवत्। स्थितस्य गतिश्चिन्तनीयेति चेत्। विद्वांस इति भावप्रधानो निर्देश इति कल्प्यताम्। स च महत्त्वेन विशेष्यताम्। महद् विद्वत्त्वमेषामिति महाविद्वांसः। यथा विशारद इत्यत्र शारद इति भावप्रधानो निर्देशः। विनष्टं शारदत्वमप्रतिभत्वमप्रौढत्वं वास्येति विशारद इति व्युत्पादयन्ति। परं च वाक्यमित्थं विपरिणमनीयम्—एते तथा साधवो यथा द्विषत्यपि दयां कुर्वन्तीति।

## शतृशानचोः प्रयोगविषयः

परिणता विशेषणविशेष्यभावचिन्ता। इदानीं शतृशानचोः प्रयोगविषयं चिन्तयामः। लटः शतृशानचावप्रथमासमानाधिकरणे ( ३।२।१२४ ) इति शास्त्रमप्रथमान्तेन सामानाधिकरण्ये सति शतृशानचौ लडादेशौ शास्ति। व्यवस्थितविभाषा चेयमिति वृत्तिकारादयः। तेन क्वचित् प्रथमासामानाधिकरण्येप्यादेशौ दृश्येते इति सन् ब्राह्मणः, विद्यमानो ब्राह्मणः, अधीयानो ब्राह्मण इति भवति। पक्षेऽस्ति ब्राह्मणः, विद्यते ब्राह्मणः, अधीते ब्राह्मण इति च। प्रथमान्तेन सामानाधिकरण्ये शतृशानचौ यन्नेच्छति सूत्रकारस्तत्रायमस्याभिप्रायो लक्ष्यते—लडादेशौ शतृशानचौ कृतौ।[१] तेन कृत्तद्धितसमासाश्चेति शत्रन्तं शानजन्तं वा शब्दस्वरूपं प्रातिपदिकं भवतीति शब्दशक्तिस्वाभाव्याद् विशेषणं भूत्वा वर्तमानकालिकगत्यादिक्रियायाः कर्तारं कर्म वा यथाविवक्षमाह। न तु तिङन्तवद् देवदत्तादिकर्तृकवर्तमानकालिकगत्यादिक्रियामिति विधेयत्वेन तस्य प्रयोगोऽनुपपन्न इति। अनुपपन्नत्वेपि क्वचिदभ्यनुज्ञायते व्याकरणस्यान्वाख्यानस्मृतित्वात् इति व्यवस्थितविभाषामाश्रयतां व्याख्यातॄणामाशयः। तथा च क्वाचित्काः प्रयोगाः श्रुतिस्मृत्योः—मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि इति ( बृ० उ० २।४।१ )। स यदोत्क्रमिष्यन् भवति

१. कृत्प्रत्ययौ।

संचरन्नपि कौन्तेय सर्वाँल्लोकान् यदृच्छया
(भा० वन० ६१।५)।



नैतं घोषं शृणोतीति (श० ब्रा० १४।८।१०।१)। स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा च। एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति (छां० उ० ५।१०।९)। यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि (५।११।५) इति च। यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः (मनौ २।१५६)। सूत्रोदाहरणानि तु पचन्तं देवदत्तं पश्य, पचमानेन देवदत्तेन कृतम्, याचमानाय भिक्षुकाय देहि, शिशोर्वदनकमलं पश्यन्त्याः किमपि प्रह्लादते चित्तं जनन्याः, न हन्यते हन्यमाने शरीरे इत्यादीनि निर्बाधं प्रसरन्ति।

इदमत्र चिन्त्यम्—वृत्तिकारादयः प्रथमासामानाधिकरण्ये क्वचिदेव शतृशानचाविति मते स्थिताः। दृश्यन्ते च तत्रापि विततः प्रयोगा इति कोऽत्र समाधिः। तथा च केचित्स्थूलमुच्चीयन्ते—उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् (ऋ० २०।७१।४)। कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति यजुषि (४०।२)। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवाँ जायत इति ब्राह्मणम्। स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते (कौ० ७।४) इति। जानन्नपि हि मेधावी जडवल्लोक आचरेत् इति मनौ (२।११०)। प्रयुञ्जान एव खलु भवानाह सन्ति शब्दा अप्रयुक्ता इति (भाष्ये)। ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् इति रघौ (२।१७)। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति (तै० उ० २।९)। ततश्चिन्त्रीयमाणोऽसौ हेमरत्नमयो मृग इति भट्टौ (५।४८)। एवमनुष्ठिते चत्वारोऽपि ते...... परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्तीति पञ्चतन्त्रे मित्रभेदे षोडश्यां कथायाम्। गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेत्, जघन्यमितरान् इति चरके (सूत्र० ३।१७)। तस्य चेत् केशलोमान्यायम्यमानानि प्रलुच्येरन्न च वेदयेयुस्तं परासुरिति विद्यात् इति च (इन्द्रिय० ३।६)। प्राचीं दिशं निषेवन्तः सदा देवाः सदानवा इति (वा० पु० ४२।२२)। निषेवन्तः = निषेवमाणाः। कार्याणि घटयन्नासीद् दुर्घटान्यपि हेलयेति राजतरङ्गिण्यां (४।३६४)। इदं क्वाचित्कमिति कोऽसंमूढः प्रतीयात्। भाष्यकारस्य तु व्यवस्थितविभाषा नाभिमता। तत्र भवान् नन्वोर्विभाषेत्यतो विभाषामनुवर्तयति येन प्रथमासामानाधिकरण्ये विभाषा शतृशानचाविच्छति, उदाहरति च पचन्, पचति। पचमानः पचत इति। न वयं लक्षणैकचक्षुष्का लक्ष्यैकचक्षुष्का वा। लक्ष्यलक्षणे उभे अपेक्षामहे। लक्ष्ये त्विदं निभालयामहे यत्र शत्रन्तं शानजन्तं वा शब्दरूपमात्मनैव विधेयं न तु विधेयान्तरमस्ति तत्र क्वचिदेव, प्रथमासामानाधिकरण्ये शतृशानचौ भवतो यथा चोदाहृतम्। येन देवदत्तः पचन् (अस्ति) इत्यादिर्भाष्यकारेणाभ्यनुज्ञातोऽपि विरलः प्रयोगः। यत्र च खलु तद् विधेयांशो भवति

न तु सत्र विधेयं तत्राप्रतिहतः प्रयोगप्रसर इति। तस्मात् कटं कुरुते। देवो वर्षति। रावणो हन्यते। ते भुञ्जते। वयं विचारयाम इत्यादीनां स्थाने कटं कुर्वाणोऽस्ति। देवो वर्षन्नस्ति। रावणो हन्यमानोऽस्ति। ते भुञ्जानाः सन्ति। वयं विचारयन्तः स्म इत्यादि व्यवहारानुपातीति परिहरणीयमिति मतं नः। कथं वात्र सूरयः पश्यन्ति।

## तुमुन्प्रयोगविषयः

उक्तौ शतृशानचौ। तुमुन्नधिक्रियते। इदमिह विचार्यते भिन्नकर्तृकत्वेऽपि तुमुन्प्रयोगः शास्त्रस्य संमत उत नेति। शास्त्रे तुमुन्विधायिका पञ्चसूत्री समस्ति। तत्र समानकर्तृकेषु तुमुन्नित्येकं वर्जयित्वा शिष्टेषु समानकर्तृकत्वमुपाधिर्नाश्रितः। तेन स्थाने शङ्कितं तद्विहितस्तुमुन् भिन्नकर्तृकत्वेऽपि स्यादिति। कालसमयवेलासु तुमुन् (३।३।१६७), अक्रियार्थोपपदेषु शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् (३।४।६५), पर्याप्तिवचनेष्वलमर्थेषु (३।४।६६), इति त्रिषु सूत्रेषु तावत्समानकर्तृकतोपाधिना नार्थ इति वचनं नापेक्षते। तुमुण्ण्वुलौ क्रियायां क्रियार्थायामित्येकं तु सन्देहास्पदम्। अत्र विसंवदन्ति विवरीतारः। भाषावृत्तिटीकाकृत्सृष्टिधर आह—समानकर्तृकेषु तुमुन्निष्यते। अयं (तुमुण्ण्वुलाविति विहितः) तु भिन्नकर्तृकत्वेऽपि स्यादिति मस्करिणो वस्तुं कुटिं घटयति। गृही सुतेन भोक्तुं मांसं क्रीणातीति। भट्टोजिदीक्षितप्रभृतयस्तु नैतत्सहन्ते। आह च प्रौढमनोरमायां भट्टोजिः—तुमुण्ण्वुलाविति विधिरपि भिन्नकर्तृकेषु नेष्यते। पुत्रं भोजयितुमागच्छतीति वक्तव्ये पुत्रेण भोक्तुमित्यप्रयोगात्। सेयं व्यवस्था शब्दशक्तिस्वाभाव्याद् बहुलग्रहणाद्वा सिद्धेति। समानकर्तृकेष्विति स्पष्टार्थमेवेति भाव इति हरिदीक्षितो नागेशश्च। व्यवहारदर्शनादपीदमेव मतं समर्थितं भवति। व्यवहारश्च प्रायिको गृह्यते। भवतु नाम क्वाचित्को व्यभिचारोऽनवधानकृतः, न तेन किंचिच्छिद्यते। तेन न दास्यामि समादातुं सोमं कस्मैचिदप्यहम् इत्यत्र भारतप्रयोगे (आदि० ३५।९) पि भिन्नकर्तृकतायां तुमुन्। यद्यर्थिता निहृतवाच्यशल्यान्प्राणान् मया धारयितुं चिरं व इति (रघौ १४।४२)। ''गुरुणा हि मेदिनी। भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता इति च (१९।३)। न मृष्यति मां जीवितुं वसन्तबन्धुरिति दशकुमारचरिते (उ० २, पृ० १२९)। न कोऽपि निर्गन्तुं प्रवेष्टुं वानुमोद्यत इति मुद्राराक्षसे (अं० ५)। श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी। मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् (भट्टौ ५।९३)। इत्यादिषु कर्तृभेदेऽपि तुमुनः प्रयोगश्चिन्त्य एवेति स्थितिः। तस्मादनुजानीहि मां गमनायेति भवति न त्वनुजानीहि मां गन्तु-

मिति। एवं सा भृत्यं कूपाज्जलमाहर्तुमादिशत्, गुरुः शिष्यं चापलं कर्तुं न्यपेधत्। स स्वामिनं हन्तुं भृत्यानचोदयत्, इत्याद्यनुक्त्वा क्रमेण स भृत्यं कूपाज्जलमाहरेत्यादिशत्। गुरुः शिष्यं मा स्म चापलं करोरिति न्यपेधत्। स स्वामिहत्यायै भृत्यानचोदयत् इत्याद्येव वक्तव्यम्। तथा च श्रीरामायणे प्रयोगः— गमनायान्यदेशस्य चोदयन्त्यृषयोऽद्य माम् (रा० २।११६।१८)।

क्वचिच्छास्त्रेणाविहितोऽपि तुमुन् महाकविभिः प्रयुज्यते। अगृहीतहेतिष्वशिक्षितो मे भुजः प्रहर्तुमिति श्रीहर्षचरिते बाणप्रयोगः। अत्र केन तुमुन्विधिः। न तावत् शकधृषज्ञाग्लाघटरभलभेत्यादिना शास्त्रेण। तत्रार्थशब्दस्यास्तिनैव सम्बन्धस्वीकारादन्येषु स्वरूपगृहीतेष्वेवायं विधिर्न पुनः पर्यायवचनेष्वपि। न च तुमुण्वुलाविति सूत्रेण शक्यमिह तुमुन्विधातुम्। अक्रियार्थोपपदत्वात्प्रहरतेः। न हि शिक्षणं प्रहरणार्थं भवति किन्तर्हि प्रहरणविषयकं प्रहरणकर्मकम्। यदा तत्तदर्थं स्यात्किल तदा किं शिक्ष्यत इति प्रश्नस्य किमु उत्तरं स्यात्। अयमत्र समाधिः प्रतिभाति। शिक्षतिरिहाविवक्षितकर्माऽकर्मकः प्रयुक्तः। तथा सति प्रहरणार्था शिक्षेति न दुर्घटोऽर्थः। तेन क्रियार्थोपपदत्वात्तुमुण्वुलावित्यनेन तुमुन् संगतो भवति।

इदं चेह विमृश्यं बाष्पश्च न ददात्येनां द्रष्टुं चित्रगतामपि (शाकुन्त० ६।२२), स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्य इति च किराते (५।२८)। अत्र तुमुन्केन। उभयत्र भिन्नकर्तृकत्वे तुमुन्निति नातीव तिरोहितम्। पूर्वत्र वाक्ये ददातिक्रियायाः कर्ता बाष्पः। दृशिक्रियायाश्च वाक्यवहिर्भूतो दुष्यन्तः। उत्तरत्र चापि स्मरणं सुरसुन्दरीकर्तृकम्। दिशिश्च ''लताभवनादिकर्तृक इति परिस्फुरति कर्तृभेदः। सुरसुन्दरीभ्य इत्यत्र क्रियाग्रहणमपि कर्तव्यमित्युपसंख्यानात्सम्प्रदानतायां चतुर्थी। ता एव स्मरणकर्त्र्य इति वस्तुसन्नप्यर्थो न विवक्षितः कविना। तथा चोक्तं हरिणा वाक्यपदीये—

शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः।
सर्वदा सर्वथा भावात्क्वचित्किंचिद्विवक्ष्यते ॥ ३।७।२॥ इति।

एतज्जातीयके तुमुन्प्रयोगे कः समाधिरिति शास्त्रपारावारपारंगताः पारयन्ति वक्तुम्।

तुमुनोर्थः क्वचिदपि न निर्दिष्टः शास्त्रे। अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति। स्वार्थश्च धातूनां भाव एवेति तुमुन् भावे पर्यवस्यति। तत्रेदं चिन्त्यते किं भावाभिधायि तुमुन्नन्तं शब्दरूपं वाक्ये कर्तृतया व्यवहार्यं भवति यथा घञन्तं ल्युडन्तं वाऽऽहोस्विन्नेति। नेत्याह कोषकारः शिवराम आपटेः। न हि भवति प्रातर्विहर्तुमारोग्यकरमिति। परमत्राप्यनेकान्तः। तथा च भारते कर्तृतायां

प्रयोगाः—क्षमं ते जीवतो गन्तुम् ( वन० २२३।११ ) इति। पुष्करं दुष्करं गन्तुमिति च (३।८०।५८ भं० सं० सं०)। वक्तुं नायाति राजेन्द्र एतयोर्नियमस्थयोः। अर्वाङ् निशीथात् (सभा० २१।३३) इति च। व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परां गतिम्। गन्तुं ब्रह्मन्सपुत्राणामिति धर्मविदो विदुः॥ ( आदि० १५८।२२)। न न्याय्यं निहतं शत्रुं भूयो हन्तुं नराधिप ( शल्य० ११५।१८ )। दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथञ्चनेति ( शल्य० ९।१६ ) इति। न नशारं न्याय्यं शस्तुमेवमिति च श्रीरामायणे (६।३८।२८) रामाय यौवराज्यं मे दातुमत्रैव रोचते इति गोरीसियो-सम्पादिते श्री रामायणे ( २।२।४ )। प्रतिकर्तुं प्रकृष्टस्य नापकृष्टेन युज्यत इति च (४।१७।७)।

## लकारार्थचिन्ता

पर्यवसितचिन्तस्तुमुनः प्रयोगः। इदानीं लकारार्थे चिन्तां प्रवर्तयामः। भगवता सूत्रकारेण वर्तमाने लड् विहितः, व्यवहारे त्वन्यत्रापि स दृश्यते। किं करोमि क्व गच्छामि। अत्र किं प्राप्तावसरं कर्तव्यं क्व वा मे गमनं हितमिति वक्तुरात्मनि सम्प्रश्न इति लोट् प्राप्तः। तं व्यावर्त्य लटमेव प्रयुञ्जते प्रयोगचणाः। ननु गच्छामि भोः, ननु करोमि भो इत्यत्र ननुरनुज्ञैषणायाम्। अनुजानीहि मां गमनं प्रतीत्यादिरर्थः। अनुज्ञा चेहेष्यते, प्रार्थ्यत इति प्रार्थनायां लोटि प्राप्ते लट्प्रयुक्तिर्व्यवहारमात्रनिबन्धना। अङ्ग कूज वृषल। इदानीं ज्ञास्यसि जाल्मेत्यत्र प्रातिलोम्ये गम्यमाने तिङन्तमनुदात्तं भवतीति प्रत्युदाहृतं काशिकायाम् (८।१।३३)। तत्र कूजनमनभिप्रेतमसौ कुर्वन्प्रतिलोमो भवतीत्यर्थः। तस्मात् कूजेति लडर्थे लोट्प्रयोग इति प्रव्यक्तम्। वर्तमाने लड् इति वर्तमानकालिकक्रियावृत्तेर्धातोर्लड् विहितः, शीलोपहितेऽपि धात्वर्थे स भवति। तद्यथा इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयतीति शाकुन्तले ( तृतीयेऽङ्के )। लकारान्तराण्यपि लडर्थे दृश्यन्ते—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति॥

इति कालिदासप्रयोगे लडर्थे लृट् स्पष्टः। अत्र पूर्वत्र वाक्ये दार्ष्टान्तिके वर्तमानता क्रियायाः स्पष्टेति तत्साम्यादुत्तरवाक्ये दृष्टान्तेपि वर्तमानतैवेष्टा। तत्र च लृट् प्रयुक्तः कविना। सोऽसन्देहं वर्तमान एव व्याख्येयः, गत्यन्तराभावात्। एवं प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो इत्यत्र कुमारे ( २।३१ ) भविष्यति ज्ञानक्रियाया अनभिप्रेतत्वाद् 'अन्तरात्मासि देहिनाम्' इत्यनेनासंगतेश्च वर्तमानतैवाभिप्रेतेति व्यक्तम्। तेनात्रापि लडर्थे लृड् व्यवहारानुपातीति प्रतिपत्तुमुचितं शासनाद्दृतेऽपि। एवमहो कामस्य वामत्वं यो गतामपि दुर्लभाम्।

स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम् (रा० ४।१।६८)॥ इत्यत्र, सकुण्डलं सकवचं दीर्घबाहुं महारथम्। कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यतीति भारते (कर्ण० ३४।६०-६१)॥ यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यतीति स्वप्ननाटके (६।१४) ऽपि लडर्थे लृट्। एवं भारतेऽपि व्यक्तं दूरे विराटस्य राजधानी भविष्यति (५।६) इत्यादिषु सर्वत्र बौद्धः शब्दार्थ इति ते तेऽर्था बुद्धिमुपगन्तारो न त्विदानीं बुद्धिमुपगता इति भविष्यन्ती सत्ता तेषामिति युज्यते लृट्। अयं च व्यक्ततर आस्वाद्यतरश्च लडर्थे लोट्प्रयोगः—ब्रह्मणो वा एतद्विजये महीयध्वम् इति केनोपनिषदि। पूजिता महान्तो भवथेत्यर्थः, सर्वस्य सम्प्रतिपत्तेः। तद् ब्रूत वत्साः किमतः प्रार्थयध्वमिहागता इति कुमारे (२।२८)। न भ्रातरो न च पिता नैव त्वं मधुसूदन। ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् इति च भारते (वन० १२।२५-२६)। उपेक्षध्वम् उपेक्षध्वे। अत्रैवं-भाषणे व्यवहार एव निबन्धनं न शास्त्रम्। क्वचिल्लडर्थे लिङमपि व्यवहरन्ति यथा—इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम् इति भारते (उद्योग० ५५।३६)। अस्याश्च वाचो भङ्ग्या इच्छार्थेषु विभाषा वर्तमाने इति सूत्रानुग्रहोऽस्तीति नात्रोपपादनान्तरेणार्थः।

इदमपि लृट्प्रयोगे वैचित्र्यं विमर्ष्टव्यम्। अक्षमोऽसि सितासिते विवेक्तुमिति व्यक्तम्, नो चेद् दग्धं पूपशकलं नात्स्यसि (नहीं तो जले हुए पूप का टुकड़ा न खाता) इति। त्वन्नियोगाद्ग्रामदर्शनार्थं प्रस्थितः कथमन्तरा निवर्तिष्ये (कैसे बीच में लौट आता) (प्रतिमा० षष्ठेऽङ्के)। अन्यथा कथं त्वामर्चनीयं नार्चयिष्यामः (मालविका०)। अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनस्यानुज्ञास्यति इति च। सन्ध्ययाप्यनुगतं रवेर्वपुर्वन्द्यमस्तशिखरे समर्पितम्। येन पूर्वमुदये पुरस्कृता नानुयास्यति कथं तमापदि॥ इति च कुमारे (८।४४)। यद्यहं गात्रसंस्पर्शं रावणस्य गता बलात्। अनीशा किं करिष्यामि विनाथा विवशा सती॥ इति रामायणे (५।३७।६३) हनुमन्तं प्रति सीताया वचनम्। अत्र पूर्ववाक्ये यदिशब्दः सिद्धार्थानुवादे, न हेतौ। यथा नोलूकोऽपि विलोकते यदि दिवा सूर्यस्य किं दूषणम् इत्यत्र। अत्रैवमर्थे लृट् दृश्यते न च शिष्यते। लृटैव चैवमादिरर्थोऽभिधीयते विचक्षणैरितीह समुपन्यस्तैरुदाहरणैरेव सुज्ञानम्। न च हेतुहेतुमद्भावे लिङो लङो वाऽत्र विषय इति शक्यशङ्कम्। लिङस्तावद्धेतुहेतुमद्भावे सति भविष्यन्नेव कालो विषयः। इह च वाक्येष्वतीता क्रियोच्यते न भविष्यती। सापि व्यामिश्रा न शुद्धा। शक्नोत्यर्थोपहितेऽर्थे वर्तमानाद्धातोरत्र लृड् दृश्यते, नानुपहिते। अत्रोदाहरणेषु हेतुहेतुमद्भाव एव नास्ति। न ह्यत्र क्वचिद्धेतुवाक्यं श्रूयते। सिद्धार्थानुवादकमेव तु वाक्यं यत्र

तत्रोच्चार्यते। हेतुहेतुमद्भावाभावे क्रियातिपत्तेर्विचार एव नोदयते। यद्यपीह सर्वत्र पूर्ववाक्येषु तात्पर्यग्रहाद्धेतुत्वे पर्यवस्यत्यर्थः, तथापि हेतुत्वं शब्दोक्तं नास्तीति लिङो लृङो वा नैष विषय इति विशदं विपश्चिताम्।

सन्देहाक्रान्ते भूतेऽर्थे वर्तमानाद्धातोर्ल‍ृट्—प्रयोग एव शिष्टाभ्यनुज्ञातोऽविहितोऽपीत्यपि दिङ्मात्रमुदाहरामः—न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः (रघौ ८।४४)। तदयमपि त्वष्टुः कुन्दे भविष्यति चन्द्रमा इति (अनर्घ० २।८०)। श्रीरामायणे खल्वपि—हता मृता वा नष्टा वा भक्षिता वा भविष्यति इति (२।६०।८)। यथा च नो मतिर्वीर विपरीतो भविष्यति (भा० १।१२८।६१)। अगोपाश्चागता गावः कचस्तात न दृश्यते। व्यक्तं हतो मृतो वापि कचस्तात भविष्यति इति च (१।७६।३२)। बौद्धः शब्दार्थ इति विपरीतत्वादेर्बुद्ध्यनुपारोहाद् भविष्यत्कालतेति लृट् प्रयोगोपपत्तिमाहुः।

## समासस्येष्टत्वानिष्टत्वे

उक्तो लकारार्थविशेषः। इदानीं समासमधिकृत्य किञ्चिद् ब्रूमः। न वयं समासशास्त्रमुदाहृत्य समासाश्रयविधिं वा निरुच्य कृतित्वमात्मनोऽभिलष्यामः। उक्तः स विषयो भगवता सूत्रकारेण विवृतश्च वृत्त्यादिभिः। इदं तु विशिष्य विवक्षामः समासः क्वेष्यते क्व च नेष्यत इति। क्व समासेनैवार्थोऽभिधेयः क्व च व्यासेनैवेति। सत्यमिष्टं हि विदुषां लोके समासव्यासधारणमिति द्वावेव वाचां मार्गौ प्रथेते। तत्र कदा कस्य परिग्रह इति तावद् विवेच्यम्। अस्थाने क्रियमाणे समासे पदानामनिष्टो गुणप्रधानभावः प्रसज्यते। वाक्यप्रसादोऽपि बहुधा विलीयते। इदं तावत् कालिदासीयं वाक्यं विचिन्त्यताम्—जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तवेति। अत्र पुरुपदस्य यत् प्राधान्यं न तत् समासे सत्यवतिष्ठते। समासगतोऽयं शब्द, सम्बन्धमात्रमाह, नातोतिरिक्तं किञ्चित्। वाक्यगतस्तु स साभिप्रायं विशेषणं व्याख्यायते। बहुविधश्चाभिप्रायस्तत्र लक्ष्यते। अयं नाम वंशो यस्य कस्य न भवति किन्तर्हि प्रथां गतस्य पितृभक्तस्य पुरोः, योऽयमात्मनो सौख्यं तृणीकृत्य स्वं यौवनं जनकाय ययातयेऽददात्, जरां च तदीयां पर्यग्रहणात्। अत एवात्र प्रणिगदन्ति भाषामर्मज्ञाः—

सम्बन्धमात्रमर्थानां समासो ह्यवबोधयेत्।
नोत्कर्षमपकर्षं वा वाक्यात्तूभयमप्यदः॥ इति (व्यक्ति० २।१७)।

एवमन्यत्रापि वाक्ये स्वातन्त्र्येण प्रयुक्तं पदं समासे गुणभावं भजते। यथा स तस्य स्वो भावः प्रकृतिनियतत्वादकृतक इति भवभूतिप्रयोगे स्व इति पदस्य यत् प्राधान्यं न तत् स्वभाव इति पदैक्ये भवति। स्वस्य भावः, स्वश्चासौ

भावश्चेत्युभयथापि स्वशब्द उपसर्जनम्। भाव एव च प्रधानम्। एवं योऽभिवादितविप्रस्तु[1] नाशिषं सम्प्रयच्छतीति मनुवाक्ये (  ) ऽभिवादितेन विधेयेन सह समासेऽनिष्टो गुणप्रधानभावः फलति। विधेयं प्रधानं भवति विशेषणं तु गौणम्। तेन यस्तु विप्रोऽभिवादितः सन्नित्यादि व्यासेन वक्तव्यम्। अन्यत्रापि परिहार्योऽस्थाने समासो दृश्यते। तद्यथा—सर्वं परिक्षेप्यतपश्च मत्वेति बुद्धचरिते (७।३४)। तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिरिति हितोपदेशे। पूर्वत्र तपः परिक्षेप्यं मत्वेति व्यस्तं वचः शोभनं स्यात्। परिक्षेप्यमिति विधेयं समासे विशेषणतां यातीति गुणी भवति। उत्तरत्रापि स एव दोषः। विनाशकाले बुद्धिर्विपरीता भवतीति विवक्षितम्। न तु वैपरीत्यविशिष्टबुद्धिः कश्चित्पूर्वप्रकृत इहास्ति।

इदं चात्र समासवृत्तिमधिकृत्य विशिष्टमवधारणीयम्। यद्यपि मत्वर्थे बहुव्रीहिविधिरित्यभ्युपगमस्तथापि यो यावांश्चार्थो मत्वर्थीयैस्तद्धितैराख्यायते नासौ बहुव्रीहिणेति वेदनीयम्। आतपवन्ति शिखराणि हिमवत इत्युक्ते योर्थः प्रतीयते यावान्वा नासौ तावान्वा सातपानि शिखराणीत्युक्ते। भूमनिन्दाप्रशंसासु नित्ययोगे इति वचनात्पूर्वत्र नित्य आतपयोगोपीप्सितो भवति। अपरत्र कादाचित्कताऽऽतपस्य स्यान्नित्यता वेति नियतं नास्ति। अतएव स्वरप्रतिषेधाच्चेति वार्तिके नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतो गुरोररस्येतीति कैयटः। तथा चैकादश्याः सांख्यकारिकाया व्याख्यायां श्री वाचस्पतिमिश्राः प्रसवधर्मि—प्रसवधर्मो यः सोऽस्यास्तीति प्रसवधर्मि। प्रसवधर्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुमित्याहुः। एवं सधनो वणिक् इत्युक्ते बहुधनो वाभिप्रेतः स्यादल्पधनो वेति व्यवसितिर्नास्ति। धनवान् इत्युक्ते तु बहुधन एव गम्यते नैयत्येन। नित्योदकी नित्ययज्ञोपवीतीत्यत्रोदकेन यज्ञोपवीतेन च नित्यं संसर्गवान् अभिधीयते। नित्योदकः, नित्ययज्ञोपवीत इति बहुव्रीहिणा तु केवलं सत्ताभिधीयते न तु संसर्गः। क्वचिद्रूढिवशान्मत्वर्थीयान्तस्य बहुव्रीहेश्चार्थान्तरं भवति। नाथवान् इति परतन्त्रो भवति, सनाथ इति सुशोभितः।[2]

अयं चात्र नञ्समासे विशेषो बोध्यः। नञ् (२।२।६) इति हि सामान्येन नञ्समासविधिः। उदाहरति च वृत्तिकारः—न ब्राह्मणोऽब्राह्मणः।

---

१. अभिवादितस्तु यो विप्रो नाशिषं संप्रयच्छति।
श्मशाने जायते वृक्षो गृध्रकङ्कोपसेवितः॥
इत्येष पाठस्तु क्वाचित्को निर्दुष्टः। एकाक्षराधिक्यं तु भवति प्रथमे चरणे।

२. एतज्जातीयकमन्यदथ दिदृक्षुभिरस्मत्कृतः प्रस्तावतरङ्गिण्या उपोद्घातो द्रष्टव्यः।

न वृषलोऽवृषल इति। अत्र ब्राह्मणभिन्नस्तत्सदृशः क्षत्रियादिर्गृह्यते। अब्राह्मणमानयेत्युक्ते नहि लोष्टमानीय कृती भवति। सामान्येन प्रतिषेधवचनोऽपि नञ् क्वचित् पर्युदासमाह क्वचिच्च प्रसज्यप्रतिषेधम्। यत्र पदार्थान्तरस्य प्रतिषिध्यमानस्य प्रधानत्वं विधेयतया मुख्यत्वं प्रतिषेधस्य नञर्थस्याप्रधानता उद्देश्यतावच्छेदकतयाऽमुख्यत्वं स पर्युदासः। तत्र पर्युदासे नञ् समस्यते। तथैव चोदाहृतम्। यत्र तु पदार्थान्तरस्योद्देश्यतयाऽप्राधान्यं नञर्थस्य च विधेयतया प्राधान्यं स प्रसज्यप्रतिषेधः। तत्र नञर्थस्य क्रियायामन्वयः। तत्र समासो नेष्यते। उत्तरपदार्थप्रधानस्तत्पुरुष इति समासेऽभावोऽप्रधानं स्यात्। क्वचित्तु प्रसज्यप्रतिषेधेऽपि समासो भवत्येवेत्यत्र आदेच उपदेशेऽशितीति निर्देशो ज्ञापकः। शिति तु नेत्यर्थः। तथा च कविप्रयोगाः—अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः। दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥ (काव्यादर्शे २।१९७)। रत्नालोकेन संहार्यं नेति विधेयम्, सूर्यरश्मिभिर्वार्यं नेति च। उभयत्र क्रियया नञः सम्बन्धः। एवं कादम्बर्यामपि निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्। अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा। सततमसूलमन्त्रगम्यो विषमो विषयविषास्वादमोहः, नित्यमस्नानशौचवध्यो रागमलावलेप इति। अकिंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहतीत्युत्तरे रामचरिते। किंचिद् अपि न कुर्वाण इति क्रियया नञः सम्बन्धः, विधेयांशश्चायमिति स्पष्टः प्रसज्यप्रतिषेधः। तथापि नञ्समासः।

क्वचित्समासेनैवार्थोऽभिधेयो न व्यासेन। यदा विषधरजातिविशेषो विवक्ष्यते तदा कृष्णसर्प इति समासोक्तिराश्रीयते न तु कृष्णः सर्प इति व्यासोक्तिः। एवं हरीतक्यामलकं विभीतकमिति त्रितयं समुदितं 'त्रिफला' इत्येकपदेनाभिधीयते न तु त्रीणि फलानीति वाक्यघटकेन पदद्वयेन। तथा शुण्ठीपिप्पलीमरिचानां समुदायः 'त्रिकटु' इत्युच्यते न तु त्रीणि कटूनीति। अमृतसरसमित्युच्यते समासेन नगरनामधेयं न त्वमृतस्य सर इति वाक्येन। वाक्यार्थः क्रियेति वाक्येन संज्ञाया अनवगमात्। एवं चतुश्शालमिति योऽर्थ उच्यते नासौ चतस्रः शाला इति वाक्येन। चतुः शालमिति चतसृषु दिक्ष्वेकत्रावस्थितानां शालानां संनिवेशविशेष उच्यते।

केचिच्छब्दा अर्थविशेषे वर्तमानाः समासेन्तर्भूता एव प्रयुज्यन्ते। आह च—स्युरुत्तरपदे त्वमी। निभसंकाशनीकाशप्रतीकाशोपमादय इति (अमर० शूद्रवर्गे)। सदृशवचना निभादयोऽत्र गृह्यन्ते। तेन ताराधिपनिभानना (सीता), आकाशनीकाशम्, काशसंकाशम् इत्यादेः स्थाने ताराधिपेन निभमाननं यस्याः,

आकाशेन नीकाशम्, काशेन संकाशमित्यादि न शक्यते वक्तुम्। उत्तरपदेऽमी इत्याह। उत्तरपदम् इति च समासचरमावयवे रूढम्। तेन वाक्ये निभादीनां सदृशवचनानामप्रयोग इति स्थितम्।

कार्त्स्न्येऽवधारणे च वर्तमानो मात्रशब्दो नित्यं समासचरमावयव इति प्रयुज्यते न तु वाक्ये स्वातन्त्र्येण। तद्यथा—नहि रोगमात्रस्यैका चिकित्सा भवति। सर्वस्य रोगस्येत्यर्थः। नहि ज्ञातमात्रो धर्मोऽभ्युदयाय भवति। ज्ञातमात्रः = केवलं ज्ञातः।

समासगताः केचिच्छब्दा अपूर्वार्थवाचका भवन्ति। तद्यथा संख्याशब्दानां वृत्तिविषये पूरणार्थत्वं दृश्यते। त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यतेति कुमारे (५।५०)। त्रिभागस्तृतीयो भागः शेषो यासां तासु। आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। इति मनौ (८।३३)। एवं शतांशः, सहस्रांश इत्यादिषु बोध्यम्। शततमोंऽशः, सहस्रतमोंश इत्यर्थात्। संख्याशब्दानां वृत्तिविषये वीप्सार्थत्वमपि लक्ष्यते। तद्यथा—सप्तपर्णः। सप्तच्छदः। सप्त सप्त पर्णानि वृन्तेऽस्येति विग्रहात्। मात्रशब्दो वृत्तौ तुल्यप्रमाणेऽपि वर्तते तद्यथा—भिक्षामात्रं न ददाति याचितः। भिक्षायास्तुल्यप्रमाणमित्यर्थः।

क्वचिच्च समासो नैवेष्यते। महत्कष्टं श्रित इत्येव भवति न तु महत्कष्टश्रित इति। उक्तं हि सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं नेति। तेन ऋद्धस्य राज्ञः पुरुष इति भवति न च ऋद्धस्य राजपुरुष इति। भारतस्य प्रतिकोणं श्रीसुभाषस्य यशो गीयत इत्यत्र वाक्ये प्रतिकोणमिति दुर्घटः समासः। पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यव्ययार्थः प्रधानम्। स चेह वीप्सा। तस्यासत्त्वभूतस्य भारतस्येति षष्ठ्यन्तं विशेषणं न युज्यते। कोणशब्दश्च भारतमपेक्षत इति सापेक्षः। सापेक्षमसमर्थं भवतीति भारतस्य कोणे कोणे इति व्यासेनैव वक्तव्यम्। नष्टस्य शिशोरन्वेषणार्थे सम्प्रस्थिता रक्षिण इत्यत्र वाक्येऽन्वेषणमिति नष्टस्य शिशोरिति पदे अपेक्षते तेनासमर्थम्। असमर्थस्य च तस्यार्थशब्देन समासोऽनुपपन्नः। तस्मान्नष्टस्य शिशोरन्वेषणायेति वक्तव्यम्।

विशेषणं विशेष्येण बहुलमित्यभ्यनुज्ञातोऽपि समासः क्वचिन्नेष्यते। वृक्षः शिंशपा मेरुर्महीभृद् इत्यादिषु विशेषणसमासो नोपपद्यते। शिंशपावृक्षः मेरुमहीभृद् इति न शक्यते वक्तुं समासेन। कुत एतदिति चेदुच्यते—यत्र पूर्वोत्तरपदे प्रत्येकं विशेषणविशेष्यभूते भवतस्तत्रैवायं समासो भवतीति ज्ञापनाय सूत्र उभयोरुपादानमिति न्यासः।

अन्यत्र क्वचिच्छास्त्रेणैव प्रतिषिद्धः समासः। फलानां तृप्त इति भवति, न फलतृप्त इति। नृपाणामुत्तम इति भवति न नृपोत्तम इति। पञ्चमश्छात्राणा-

मिति भवति न च्छात्रपञ्चम इति। सर्वस्य विदितमिति भवति न सर्वविदितमिति।

इदं चात्र सविशेषमवधीयमानमिच्छामो वाचि शिक्षमाणैः।[१] न हि संख्याशब्दाः समस्यन्ते सङ्ख्येयेन अन्यत्र संज्ञायाः समाहाराच्च। सप्तर्षय[२] इति संज्ञा पञ्चाम्रा[३] इति च। तेन विंशतिर्गावः, शतं स्त्रियः, सप्ततिश्छात्राः, एकशतमध्वर्युशाखाः, चतुष्षष्टिः कला इत्यादि व्यासेनैव शक्यं वक्तुं न तु विंशतिगाव (टचि विंशतिगवाः) इत्यादिना समासेन। समाहारे तु वाच्ये विंशतिगवमित्यादि द्विगुः स्यात्।

इदमिह सम्प्रधार्यम् अस्य सूक्ष्मतराणि वस्त्राणीत्यर्थे वृत्तौ चिकीर्षितायां किमातिशायिकस्तद्धितः पूर्वं क्रियतां पश्चात्समास उत विपर्ययेण। अत्र वाक्यकार आह—पूर्वपदातिशय आतिशायिकाद् बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः। तेन पूर्वं सूक्ष्माणि वस्त्राण्यस्येतिविग्रहके बहुव्रीहौ निर्वृत्ते पश्चात्तरप् सिद्धो भवति। अतिशयेन सूक्ष्मवस्त्र इति सूक्ष्मवस्त्रतरः। स्वार्थे तरप्। सूक्ष्म शब्द एव सूक्ष्मतरे वर्तते, पदार्थैकदेशेनान्वयः। वेदे खल्वपि—यथा भूमि मृतमना मृतान्मृतमनस्तरा (अथर्व० ६।१८।२)। एवम् अल्पाच्तरम् (२।२।३४), व्योर्लघुप्रयत्नतरः शाकटायनस्य (८।३।१८) इत्यादय आचार्यप्रयोगा व्याख्याता भवन्ति। भारतेप्येतद्व्यवहारस्यानुग्राहकाः प्रयोगा उपलभ्यन्ते—अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि (वन० ५२।५०)। महादोषतरस्तत्र घातको न तु खादक इति च तत्रैव (अनुशा० ११५।४६)। को नु स्वन्ततरो मयेति च तत्रैव (शल्य० ६४।२१)। स चेन्ममार सञ्जय चतुर्भद्रतरस्त्वयेति च तत्रैव (द्रोण० ५५।४९)। वैदिके साहित्ये तु बहुव्रीहेरन्यत्राप्येष क्रम आस्थितो दृश्यते—गर्दभः पशूनां भारहारितम इत्यत्र ब्राह्मणे। क्वचिल्लौकिकेपि—सोऽस्मत्तश्चिरजाततर (भा० वन० १९९।७)।

इदं चात्रप्रसक्तानुप्रसक्तमुच्यते। एकशतमिति मध्यमपदलोपी समासो भवति। एकाधिकं शतमेकशतम्। एवं द्विशतं त्रिशतं षोडशशतमित्यादीनां द्व्यधिकं शतं त्र्यधिकं शतं षोडशाधिकं शतमित्यर्थो न तु द्वे शते त्रीणि शतानीत्यादिः॥[४]

---

१. शक्तैर्बुभूषुभिः।

२. मरीच्यत्र्यङ्गिरः पुलस्त्यपुलहक्रतुवसिष्ठाः सप्तर्षयः।

३. अश्वत्थ एकः पिचुमर्द एको द्वौ चम्पकौ त्रीणि च केसराणि। सप्ताथ ताला नव नारिकेलाः पञ्चाम्ररोपी नरकं न याति॥ अत्र श्लोके पञ्चाम्राः परिगणिताः।

४. एकादशादिषु दशान्तासु संख्यास्वयमर्थस्तद्धितवृत्त्यापि पार्यते वक्तुम्—एकादशं शतम् (एकादश अधिका अस्मिञ्शते १११)। द्वादशं सहस्रम् (द्वादश अधिका अस्मिन्सहस्रे)।

## अथ प्रकीर्णकम्

इदानीं यत्र प्रयोगेषु विभ्रमन्त्यविपश्चितः सन्दिहते च विपश्चितस्ते कतिपये समुच्चित्य व्याख्यायन्ते, साध्वी प्रयोगविधा च प्रदर्श्यते ।

प्रत्येकमिति यथार्थे वीप्सायामव्ययीभाव इति सर्वस्य विदितोर्थः । अव्ययीभावश्च नपुंसकं भवतीति प्रत्येकं नपुंसकमित्यपि नाविदितम् । इदं च नाञ्जसा वेद लोको वाक्येऽस्य कथं प्रयोग इति स विमृश्यते । अपि शक्यं नाम 'फलाय निर्मितोपि नहि प्रत्येकं पादपः फली भवती'ति वाक्यं प्रणेतुम् ? नेत्याह । वीप्सायामर्थेऽव्ययीभावः क्रियाविशेषणमेव भवितुमर्हति । वीप्साया ( व्याप्तेः ) विषयः पादपश्च बहुवचनान्त एव, अन्यथा वीप्सा द्योतिता न स्यात् । तस्मात् फलाय निर्मिता अपि पादपा नहि प्रत्येकं फलिनो भवन्तीत्येव साध्वी वाक्यप्रणीतिः । असमासे तु वीप्सायां व्याप्यमानं पदं द्विरुच्यते । द्विरुक्तिर्वीप्साया द्योतिका भवति यथा ग्रामे ग्रामे काठकं कालापकं चाधीयत इत्यत्र । स्पष्टप्रतिपत्त्यर्थं प्रयोगनिदर्शकानि वाक्यान्तराण्युदाहरामः—येऽत्र पुर्यां साङ्गवेदविदस्ते प्रत्येकं निमन्त्रयितव्याः । अत्र त्रिंशच्छात्राः सप्तम्यां श्रेण्याम्, प्रत्येकं छात्रेभ्यः पारितोपिकाणि प्रदीयन्ताम् । विदितोऽयमर्थः प्रत्येकं विदुषाम् । षष्ठ्यर्थविवक्षया प्रत्येकस्येति न शक्यं वक्तुम् । अदन्तादव्ययीभावात्सुब्लुङ् न भवति, तस्य सुपोऽमादेशो भवति, तृतीयासप्तम्योस्तु स बहुलम् । प्रत्येकशब्दस्येत्थम्भूते प्रयोगे भाष्यकारव्यवहारो मानम्प्रथमम्—देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते, न पुनरुच्यते प्रत्येकमिति, अथ च प्रत्येकं भोज्यन्ते ( १।२।१ ) । अथर्वभाष्ये (८।६।१७) उद्धर्षिप्रभृतीनि प्रत्येकं योगरूढान्यसुरनामानीति सायणप्रयोगोप्येतं व्यवहारं समर्थयते । ताण्ड्यब्राह्मणभाष्ये (१२।१२।६) ऽपि एषैव प्रतीची प्रत्यञ्चती प्रत्येकं स्तोमानि प्राप्नुवतीति तस्यैव प्रयोग उक्तमर्थं भूय उपोद्बलयति । कविकुलपतिः कालिदासोप्येतमेव व्यवहारमनुरुन्धे यदाह—सा पौरान्पौरकान्तस्य रामस्याभ्युदयश्रुतिः । प्रत्येकं ह्लादयामासेति (रघु० १२।३) । अपरेषु निपातनेषु तु प्रत्येकं विभक्तिनिर्देशः (काशिका ७।२।३४ सूत्रे) । जघन्यास्ते प्रत्येकं विनेयाः पूर्वसाहसम् ( ना० स्मृ० ) । ते सर्वे प्रत्येकं पणशतं दण्डार्हा भवन्ति ( मिता० याज्ञ० २।२३५-२३७ ) ।

वरमित्यनव्ययं मनाक्प्रिये नपुंसकम् । अव्ययमिति तु केषांचिद्विभ्रमः । अत्रार्थेऽस्य प्रचुरः प्रयोगः । याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामेति मेघदूते । समुन्नयन्भूतिमनार्यसङ्गमाद्वरं विरोधोपि समं महात्मभिः ( किरात० १।८ ) । एकवचनान्तत्वं च नियतम्—वरं हि भुक्तानि तृणान्यरण्ये तोषं परं रत्नमिवोपगृह्य । सहोषितं श्रीसुलभैर्न चैव दोषैरदृश्यैरिव कृष्णसर्पैः ॥ ( बुद्धचरिते ९।५२ ) । असत्यपि वाक्यभेदे वरमिति नपुंसकैकवचनं प्रयुज्यते प्रयोग-

कुशलाः—निःश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः । वरमाशीविषैः सङ्गं कुर्यान्न त्वेव दुर्जनैः ॥ इत्यत्र कामन्दके (३।१८) यथा । मनाक् प्रियमित्यर्थस्तु पूर्ववदवस्थितः । काममाशीविषैः सङ्गं कुर्यान्न तु दुर्जनैः कदाचनेति वक्तुरभिसन्धेः । अन्यत्रापि । याः प्राणान्वरमर्पयन्ति न पुनः सम्पूर्णदृष्टिं प्रिये इति (सा० द० ५४।२२) । प्राणार्पणमिच्छेयुर्न तु प्रिये पूर्णदृष्टिनिपातनमिति तदर्थः । वरं महत्या म्रियते पिपासया तथापि नान्यस्य करोत्युपासनम् ॥ तस्माद्वरं सहायं तं शकटालं समुद्धरे इति (कं० स० सा० ५।४) । यदि शकटालं समुद्धरेयं तदा वरं स्यादित्यर्थमाचष्टे । साधीयो यथा स्यात्तथेत्यर्थे वरं क्रियाविशेषणमिति व्यवहरन्त्यृषयस्तद्यथा—प्र ते अग्नयोऽग्निभ्यो वरं निःशोशुचन्त (ऋ० ७।१।४) । अयं सहस्य आ वरं वि वो मदे प्रान्ध्रं श्रोणं च तारिषद् इति च (ऋ० १०।२५।११) । आ पाहि क्षेम उत योगे वरं नः (ऋ० ७।५४।३) । क्षेमे रक्षा नोऽभीष्टा, योगे त्वभीष्टतरेति विवक्षत्यृषिः । वरमिति प्रत्युतार्थेऽपि क्वचित्प्रयोगमवतरद्दृष्टम्—शठस्तु समयं प्राप्य नोपकारं हि मन्यते । वरं कृतमुपकर्तारं दोषदृष्ट्या च दूषयेदित्यत्र यथा । उत्कृष्टे गुणवत्तरे वार्थे वर्तमानो वरशब्दो विशेषणं विशेष्यनिघ्नं भवति—हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यत इति याज्ञवल्क्यस्मृतौ (१।३५१) दर्शनात् ।

स्वागतशब्दप्रयोगमधिकृत्य किञ्चिद् विवक्षामः । अयं हि वाक्ये दुष्प्रयुज्यते प्रायेण । अभ्यागतस्य स्वागतं करोति गृहीत्येवं वाक्यन्यासं साधुं मन्यन्ते साम्प्रतिकाः । इदं च प्रस्मरन्ति नहि स्वागतं क्रियते किन्तर्हि व्याह्रियते । (तस्मै) प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहारेति मेघे तथा दर्शनात् । स्वागतमिति स्वागतशब्दपदार्थकः शब्दः । स चोच्चारणक्रिययान्वेति न क्रियान्तरेण । स्वागतं स्वाधीकारान्प्रभावैरवलम्ब्य वः । युगपद् युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥ (कुमारे २।१८) । स्वागतमिति सभाजनपर्यायो न । स्वागतेन यथार्हेण (रा० ६।१११।३१) । अत्रापि स्वागतेन स्वागतशब्दोच्चारणेनेत्ययमेवार्थः । भारतेपि स्वागतमुच्यते न तु क्रियते इति स्पष्टमवगम्यते—तथा च स्वागतेनोक्तौ (तौ) विष्टरे संनिषीदतुः (उद्योग० ११३।२) इत्यत्र प्रयोगः । तं स्वयम् । स्वागतेनादृतवती इति (कं० स० शा०) इत्यत्रापि स्वागतशब्दः सत्क्रियां नाह । आदृतवतीत्यनुपदं प्रयुज्यमानस्य क्तवत्वन्तस्य वैयर्थ्यप्रसक्तेः । बाढं स्वागतशब्दोच्चारणेन सत्क्रियते स यस्मै स्वागतमित्युच्चार्यते शब्दः । न तु स साक्षात्सत्क्रियावचनः । येन स्वागतं करोतीत्युपपद्येत । श्रीमद्भागवते (१०।३९।४) स्वागतमिति निर्विघ्नं सुखमित्यर्थे क्रियाविशेषणं प्रयुक्तम्—तात सौम्यागतः कच्चित् स्वागतं भद्रमस्तु वः । पदवाक्यव्यवहारे भागवतकारस्य स्वच्छन्दः प्रवर्तत इत्येतदास्थितं व्यवहारं नातिसूक्षेत ।

सर्वनाम्ना निर्देशः प्रायेण सत्त्वभूतस्यार्थस्य क्रियते। अत एव सर्वनाम्ना प्रत्यवमर्शयोग्यत्वं द्रव्यत्वमिति वैयाकरणाः प्रतिपन्नाः। क्वचित्तु इदमा क्रियमाणक्रियानिर्देशो दृश्यते—इदं गम्यते। इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे इति भवभूतिप्रयोगः।

ण्यन्तस्य वृतेः प्रयोगो नानार्थको व्यवहारतोऽवसेयः। ण्यन्तको वृतिः सकर्मको भवतीति न वेदनीया विज्ञाः। व्यवहारे यदर्थवैचित्र्यं तत्र तेषामपि विविदिषोदियादिति तद्वर्ण्यते—केन वृत्तिं वर्तयसि (कल्पयसि)। कृपणं वर्तयिष्यामि कृपणैः सह जीविकाम् ( भा० शल्य० ५।२५ )। सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्तयत् समाः (रघु० १९।४)। अत्र वर्तिराचरणेऽनुष्ठाने वर्तते। पुष्करे तु ततः शेषं कालं वर्तितवान् प्रभुः ( भा० आदि० २२१।१४ )। अत्र वर्तिर्यापने वर्तते। हन्त ते वर्तयिष्यामि इतिहासं पुरातनम् इत्यनेकत्र भारते। हन्त ते वर्तयिष्यामि वज्रनाभवधं नृप ( हरिवंशे २।९१।४ )। तत्र ते वर्तयिष्यामि यथा युद्धमवर्तत ( भा० द्रोण० १३५। २८ )। अत्र वर्तिर्वर्णनमाचष्टे। ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ( शाकुन्तले ७।६ )। अत्र वर्तयतिः परिवर्तने भ्रमणे दृष्टः। रामोपि सह वैदेह्या वने वन्येन वर्तयन् ( रघु० १२।८० )। वर्तयन् = वृत्तिं कुर्वन्। कर्णो भृशं न्यश्वसदश्रु वर्तयन् ( भा० द्रोण० २।८ )। अत्र वर्तिर्मोचने वर्तते।

ष्ठा गतिनिवृत्तावित्ति भूवादिः प्रसिध्यति। मुख्येऽर्थे प्रसिध्यन्तितमां प्रयोगा इति न त उदाहार्या भवन्ति। गौणेऽर्थे प्रवृत्तोऽयं धातुश्चमत्करोति चेतः। रेणुकायाः सुत इव मूलेष्वपि न तिष्ठतीति कामन्दके (९।४६) प्रयोगे तिष्ठतिः क्रियाविरामे वर्तते। मूलावर्हणेप्यस्य प्रवृत्तिर्न विरमतीत्यर्थः। तिष्ठाद्रोगो अयं तवेत्यथर्वश्रुतौ (६।४४।१)। अत्र रुधिरस्रवात्मको रोगस्तथा तिष्ठतु यथा न स्रवतु, विरमतु स्रुतिरित्यर्थः।

वसतेरपि गौणेऽर्थे प्रयोगः सुतरां रुच्यो भवतीति स न्यस्यते—निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः। अबन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते (भा० उ०।३३।२४)। अत्र वसतिर्विरामे वर्तते। कर्म प्रारभ्य मध्ये न विरमति, कर्मान्तं यातीत्यर्थः। मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते (भा० विराट० ९।२२ )। अत्र वासिः स्थापने वर्तते।

गर्ह्याधीनौ च वक्तव्यावित्यमरः पठति। वाच्यो वचनीयो वक्तव्य इति शब्दत्रितयेन गर्ह्य उच्यते। अथावाच्यः सर्वः स्वमतिपरिणामावधि गिरन्निति महिम्नः स्तोत्रे वाच्यो गर्ह्य इत्यनर्थान्तरम्। एवं सद्वृत्तमतिक्रान्तो वक्तव्यतां याति लोक इत्यत्रापि गर्हणीयो भवतीत्यर्थः। अन्यार्थे प्रयुक्ते प्रयोगा इति न प्रपञ्च्यन्ते।

तुमुन्नन्तोपि ब्रवीतिर्गर्हामाह—सम्बन्धावनतं पार्थं न मां त्वं वक्तुमर्हसि ( भा० द्रोण० १९७।४१ )। अधीनेऽर्थे कश्चिद् दिशः समर्प्यन्ते—काम-वक्तव्य-हृदयेति श्रीरामायणे ( ३।२।२५ )। साहं त्वद्दर्शनाद् विप्र कामवक्तव्यतां गतेति मार्कण्डेयपुराणे (६१।४७)। विषयसुखेनापि परां प्रमादवक्तव्यतां व्रजन्ति लोक इति ब्रह्मजातके ( १ )।

प्रष्टव्यत्व उत्तरदायित्वे वक्तव्यता शब्दप्रयोगो दृश्यते यथा—दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे। योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्॥ इत्यत्र मनौ ( ८।२३० )।

प्रदक्षिणमित्यव्ययमनव्ययं च। उभयथा हि प्रयोगा दृश्यन्ते—कुर्यात् प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् इत्यत्र याज्ञवल्क्ये ( १।१३२ ) प्रदक्षिण-मव्ययम्। मृद्गां देवतां विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्॥ ( मनु० ४।३९ )। अत्र प्रदक्षिणमित्यनव्ययम्।

प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यत इति साहित्यदर्पणे विश्वनाथः। साधनार्था या गतिस्तां साधनाशब्देनाह गतेः प्रयोजनवतीत्वाख्यापनाय। साधयामो वयम्। गच्छाम इत्यर्थः। प्रायिक एष व्यवहार इति तेनैव व्यक्तमुदितम्। अतः क्वचिद् गमेः साधेश्च युगपत्प्रयोगो दृश्यते—स्वस्त्यस्तु ते गमिष्यामि साधयिष्यामि शोभने ( भा० वन० २०६।४७ )। अत्र साधिर्गमिव्यतिरिक्तां शुद्धां साधनां निष्पादनामाह।

उत्तममध्यमाधमा इत्यत्रोत्तमशब्दो वरिष्ठमाह। सोऽयमर्थः सार्वलौकिको विच्छित्तिविधुरश्च। उत्तममित्यन्त्यमप्याह। तथा च पाणिनीयं शासनम्—उत्तमैकाभ्यां च (५।४।९०)। उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दम् अहः सर्वैकदेशेति सूत्रान्ते वर्तमानम् आचष्टे। उत्तममहर्मासान्तो भवति। उत्तमं व्यसनं प्राप्तः ( भा० कर्ण० २८।८ ) इत्यत्रोत्तमशब्दो महत्तमेन समानार्थः। श्रुत्वा निनदमुत्तमम् ( भा० शल्य० ४।४ )। अत्रोत्तममुच्चैस्तमं तारतमम् इत्यनर्थान्तरम्। साऽप्युत्तमसंविग्नेत्यत्र रामायणीये प्रयोग उत्तमशब्दो भृशार्थकः।

शृणोतिराकर्णनमात्रव्यतिरिक्ते प्यर्थे प्रयोगमवतरन्दृष्टः स्वदतेतराम्। न क्षत्रियो वै सूतानां शृणुयाच्च कथंचन ( भा० कर्ण० ३२।४८ )। अत्र शृणुयाद्वचनकरः स्यादित्यर्थः। येषां श्रोष्यन्ति पाण्डवाः (भा० द्रोण० ८५।३१)। अत्र वच इति शेषः। स्वीकरिष्यन्तीति चार्थः। ✗

पृच्छतिर्द्विकर्मेति प्रसिध्यतितरामिति न तद्विषये किमपि विशिष्य वक्तव्य-मस्ति। अकथितकर्मणोऽ प्रयोगे पि प्रधानकर्मण एव प्रयोग आस्वाद्यताम्—स

✓ x लोके ... लोके ... लोके वीरं जन्मनं ददाति। ... पितृश्रवण यो ददाति ... (... ९।६९।२०) इत्यत्र पितृश्रवण इति पितृवचनकर इत्यर्थे प्रयुक्तः।

चालोक्य ध्वजिनीं पाण्डवानां धनञ्जयं त्वरया पर्यपृच्छत (भा० कर्ण० ३७।४५)। धनञ्जयविषयां पृच्छामकरोत् क्वासौ धनञ्जयः कथं वा वर्तत इत्यपृच्छदित्यर्थः। एवं ब्रवीतिरपि तथाजातीयकेऽर्थे प्रयुक्तः। यो मे ब्रूयाद् धनञ्जयम्। क्वावतिष्ठते धनञ्जय इति मां वेदयेत्।

अन्तरशब्दोऽवकाशादिनानार्थेषु पठितोऽमरेण। मध्यं चास्यैकतमोर्थः। तत्र चायं वर्तमानो यत्र विषयेण सहैकार्थतां याति सोऽस्य रुच्यतमः प्रयोगः। मिथो भेदाश्च भूतानामासन्कर्णार्जुनान्तरे ( भा० कर्ण० ८७।३३ )। कर्णार्जुन-विषय इत्यर्थः।

स्वस्ति शब्दो लोकेऽव्ययं वेदे तु कृतव्ययमपि दृश्यते। यूयं पात स्वस्तिभिः सदा नः (ऋ० ७।३४।२५)। स्वस्तये वायुमुपब्रवामहै (ऋ०५।५१।१२)। स्वस्ति गोब्राह्मणेभ्य इत्यादिषु लौकिकेषु प्रयोगेषु स्वस्तीति कल्याणं वक्ति। स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा ( भा० द्रोण० ९५।४४ )। अत्र स्वस्तीति कल्याणवचनं द्वितीयार्थेऽव्ययम्। स्वस्ति सञ्जय साधय ( भा० शल्य० २९।४० )। अत्र स्वस्तीति क्रियाविशेषणम्। क्षेमेण गच्छेत्यर्थः। वेदे खल्वपि क्रियाविशेषणं दृश्यते—सो अस्नातॄनपारयत् स्वस्ति ( ऋ० २।१५।५ )। न नूनं स्वस्ति पार्थाय यथा नदति शङ्खराट् ( भा० )। पार्थस्य क्षेमो नेत्या-शङ्क्यत इत्यर्थः। आशिषि लिङ्लोटोरभावे स्वस्तिशब्दप्रयोगो नूनमाकूतकरः।

तादर्थ्येऽर्थेऽप्यमरोऽन्तरं पठति—अन्तरमवकाशावधिपरिधानान्तर्धिभेद-तादर्थ्ये। तादर्थ्येऽस्य प्रयोगे विशिष्यावधेयं सुधीभिः। अत्रार्थेऽमरोद्घाटने स्वाम्याह—ओदनान्तरस्तण्डुल इति लोके प्रयोग इति। अत्रान्तरशब्दस्य पुंसि प्रयोगोऽसाधुरिति मम भाति। अन्तरं हि क्लीबत्वे नियतम्। ओदनायेत्योदना-न्तरम् इत्यस्वपदविग्रहो मयूरव्यंसकादिस्तत्पुरुषः। अवैमि कार्यान्तरमानुषस्यत्यत्र रघौ (१६।८२) कार्याय कार्यवशान्मानुषो मानुषदेहमापन्नः, तस्येत्यर्थः। शरीर-स्पर्शसुखान्तराय निपेततुर्मूर्धनि तस्य सौम्ये ( द्वे वारिधारे ) इति बुद्धचरिते (१।१६)। सुखायेति सुखान्तरम्। तस्मै। तौ वृषाविव नर्दन्तौ बलिनौ वासितान्तरे ( भा० आदि० १०२।४१ )। वासितायाः करेण्वाः कृते ( अर्थाय ) इत्यर्थः।

अन्तरमित्यन्तरेणार्थमभिदधदपि पठ्यते—न चैतदिष्टं भगवान्यदवोचन्मद-न्तरम् इत्यत्र श्रीरामायणे।

अन्तर्धावर्थेऽन्तरशब्दः प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति वचनाण्णि-च्सहितः प्रयोगमवतरति न केवलः—मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशीत्यत्र यथा।

मध्यवचनोऽन्तरशब्दो येऽन्तरं यान्ति कार्येषु ( भा० अनुशा० २३।७५ )

क्रियान्वितं करोति



इत्यादिषु तात्पर्यतोऽन्तरायमाह । अन्तरं यान्ति अन्तराया भवन्ति, विघ्नमाचरन्तीत्यर्थः ।

## औपचारिकाः प्रयोगाः

तत्र तत्र मुख्येऽर्थे व्यवहारनिरूपणायां कृतायां सम्प्रति गौणेऽर्थे व्यवहारमवतारयामः ।

इदं हि प्रतिपन्नप्रायं विमर्शकैः शाब्दिकैरन्यैश्च विदग्धैर्मुख्येऽर्थे प्रयोगा न तथा स्वदन्ते यथा गौणेऽर्थे । एकस्यान्यस्यान्यत्र गुणक्रियाध्यासात्सादृश्यसमाश्रयेण प्रवर्तन्ते तत्र तत्रोपचाराः कवीनाम् । अग्निर्माणवक इत्युक्तिर्यथार्थवती रुचिकरी च न तथा तेजस्वी माणवक इति । निमीलन्ति पङ्कजानि, उन्मीलन्ति कुमुदानि । अत्र चक्षुर्धर्मौ निमेषोन्मेषौ पङ्कजेषु कुमुदेषु चाध्यस्य संकोचविकासौ तथोच्येते । तथा चोच्यमानौ रम्यतरौ प्रतीयेते । क्वचित्तु मुख्येऽर्थे ग्राम्यत्वं गौणे च मनोज्ञत्वमुद्भवतीत्यनुभूतिः सचेतसाम् । तथा चोदाहरत्याचार्यदण्डी—

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ इति ।

मुख्येऽर्थे निष्ठ्यूतादिश्रुतय उच्चारिता उद्वेगाय भवन्ति श्रोतॄणाम् । यावता निष्ठेवनादिकाः क्रिया जुगुप्सावहा भवन्ति, इमाश्च ताः स्मारयन्ति पुरः सन्निधापयन्तीवेति भवन्त्युद्वेजिकाः । अनिरुद्धप्रसरतादिं सामान्यधर्ममादायान्यत्राविष्करणादावर्थे प्रयुक्तास्तु सौभाग्यमधिकं वहन्ति । तथा निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् । वागस्या अमृतमुद्गिरति नयने च स्नेहं वमतः । सत्यमियं वामा । चन्द्रः सुधोद्गारीति किमत्र चित्रमित्यादि ।

औपचारिकाः प्रयोगाः सुभगंकरणा निबन्धस्य रम्यतरतामस्यापादयन्तीति च्छात्रप्रबोधाय कानपीहानुक्रामामो विवृत्या च सनाथयामः—

'पुनरुक्तवस्तुविरसः सर्गक्रमो वेधस' इति । पुनरुक्तं हि मुख्यया वृत्त्याऽसकृदुक्तं व्यर्थं वचो भवति । लक्षणया पुनः पूर्वेण समानमनपेक्षितमर्थमात्रमाह । 'व्यापारैः पुनरुक्तभूतविषयैः' इति च भर्तृहरौ । 'रे रे पुनरुक्ताकार दुराचार निशाचरे' ति बालरामायणे । 'मत्सरिणस्तु परगुणेषु वाचंयमा' इति । वाचंयमो मुनिर्भवति । मुनिश्च मितवाक्तूष्णीं भवति मननात् । तेन वाचंयम इति तूष्णीमर्थं उपचर्यते । 'कविसार्थः समग्रोपि तमेनमनुगच्छति' इति । 'अप्रतिभस्य पदार्थसार्थः परोक्ष एवेति' च । सार्थशब्दो मुख्यया वृत्त्या वणिगादीनां सरतां समूहमाह । अत्र तु लक्षणया समूहमात्रम् । 'कुरु मामम्ब कृतार्थ-

समानं ब्रह्मचारी यानयोः किमपि साधर्म्यं सादृश्यं लक्ष्यते इति सब्रह्मचारिशब्दः सदृशार्थे पर्यवस्यति। तथा च प्रयोगः — सब्रह्मचारि शशिनस्त्व मुखं मृगाक्ष्याः (का० मी० ११११)।



सार्थवाहम्' इति। सार्थवाहो हि यातां वणिजां नेतारमाह मुख्यया वृत्त्या, तत्साधर्म्यादन्योपि कश्चिदयातामपि सत्तमस्तथोच्यते। 'मन्महे किमपि तुन्दिलं महः'। तुन्दिलमिति तुन्दिभमाह मुख्यया वृत्त्या। तुन्दं जठरं प्रवृद्धमस्यास्तीति व्युत्पत्तेः। अतिशायनेत्र मत्वर्थीयः। अन्यदपि यत्किञ्चिदतिशयितप्रमाणं प्रवृद्धं वा भवति तदपि तुन्दिलं भवति गौण्या वृत्त्या। 'न स्वप्नानुभवस्य कश्चिदपरः सब्रह्मचारी ममे' ति। सब्रह्मचारी नाम समानशाखाध्यायी भवति, एतादृशयोर्द्वयोः साहचर्यमनुक्तमपि गम्यते, तेनान्योपि समानकर्मा सहचरस्तथोच्यते लक्षणया। 'हे व्यसनसब्रह्मचारिन्, यदि न गुह्यं तदा श्रोतुमिच्छामि' (मुद्रा० ६)। इह कृच्छ्रे संविभागी तथा सम्बोध्यते। 'अयं मे सखा दुःखसब्रह्मचारीति कया गिरा तं स्तवीमि'। प्रजल्पितायामभिजातवाचीति कुमारे। अत्राभिजातशब्दो लक्षणया सुकुमारार्थपर्यवसायी। 'नेत्रविप्रोषिताञ्जनं मुखम्'। 'प्रीतिनिर्वासितत्रपाः'। अत्र विप्रवसननिर्वासने चेतनधर्मावञ्जने त्रपायां चाध्यारोप्येते। असंनिहितेर्थे च विप्रोषितनिर्वासितशब्दावुपचर्येते। 'विस्मृतनिमेषेण चक्षुषा'। अत्र विस्मृतपदेन विगतार्थतोच्यते। यद्धि विस्मृतं भवति तन्मनसोऽपेतं भवति। तत्सादृश्यादन्यदपि यदपेतं भवति तदुच्यते विस्मृतमिति। अपि वाऽन्तःकरणधर्मे विस्मरणं चक्षुष्यध्यस्य तथोच्यते, तथा ह्युच्यमानमावर्जकं भवति। 'तं व्यतिकरं निशम्य हृष्यन्ति नो लोमानि।' अत्र मनोधर्मो हर्षो लोमस्वध्यस्यते। अथवा यत उदञ्चन्ति लोमानि ततो हृष्यन्तीवेति जायतेऽनुमा। 'त्वद्दृष्टेरतिथीभवन्तु पञ्चालाः'। अतिथिरभ्यागतो भवति। अतिथय इवातिथय इत्यौपमिकः प्रयोगः। अतिथिरुपगन्ता भवति। इमे पञ्चालास्त्वद्दृष्टेः पात्रीभवन्त्वित्यर्थः। 'प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः' इति मेघे। अत्र मैत्रीशब्दो लक्षणया संसर्गमाह। प्रसिद्धं हि मित्रयोः साहचर्यम्। 'प्रसन्नो ब्राह्मणशेषः' इति शतपथे सायणः। प्रसन्नः प्रसादगुणवान् विशद इत्यर्थः। यथा प्रसन्नं मनोऽकलुषं भवति तथा स्पष्टाक्षरार्थः सन्दर्भः प्रसन्नो भवति। विमला आपश्च प्रसन्ना भवन्ति। 'भवति हरिणलक्ष्मा येन तेजोदरिद्रः'। अत्र दरिद्र इति क्षीणो हीनो वाऽभिधीयते। एवं मध्यो दरिद्रातीत्यत्र कृशमुदरमित्यर्थः। 'मुष्टिग्राह्यं तमः'। अत्र मुष्टिग्राह्यमिति गौण्या वृत्त्या सान्द्रार्थमाचष्टे। यद्धि शक्यते मुष्टिना ग्रहीतुं तत्संश्लिष्टावयवं घनं भवति। 'पाणिप्रणयी कोदण्डदण्डः'। अत्र प्रणयिशब्देन लक्षणया सम्बद्ध उच्यते। 'आसन्नसखीमुखेन'। अत्रासन्नशब्द आप्तं विस्रम्भभाजं वाऽऽह। यो ह्यासन्नो भवति सोभ्यन्तरीक्रियते विस्रम्भालापेष्विति लोकप्रसिद्धेः। 'नेदिष्ठो धर्मार्थसंहितासु' इति दशकुमारचरिते। अत्र नेदिष्ठो निपुण इत्यत्रार्थे लाक्षणिकः। यथाभ्यन्तरो निपुणार्थस्तथा नेदिष्ठ इत्यत्रार्थान्तरसंक्रमक्रमो न दुरूहः।

'उन्निद्राणि कुमुदानि, प्रबुद्धानि पङ्कजानि'। अत्रोभयत्र चक्षुष्क्रियाध्यासाद्भाक्तः प्रयोगः कामपि प्रीतिमावहति। 'महासेनेन दुःस्वप्नः स वञ्चितः'। अत्र वञ्चितो विसंवादितो विप्रलब्धो वा भवति मुख्यया वृत्त्या। लक्षणया तु विफलीकृत इत्यर्थः। 'अथ निर्मक्षिकं भद्र मधु पातुं मनोरथः'। अत्र निर्मक्षिकमित्यस्य निर्विघ्नमिति लक्ष्योऽर्थः। मक्षिकाणामभाव इति मुख्यार्थप्रतिपत्तेः। 'कांचिद् वेलामुपास्य'। अत्रोपासा प्रतीक्षाऽभिप्रेता। यः किल प्रतीक्षते स चिरमेकत्रोपास्त इति साधर्म्यात् प्रतीक्षणार्थलब्धिः। 'तद्वक्त्रं यदि मुद्रिता शशिकथा'। अत्र मुद्रिता प्रतिबद्धेत्यनर्थान्तरम्। अस्तं गतेति यावत्। यद्धि मुद्रितं भवति न तदुद्घाटयितुं शक्यते यथा मुद्रितो लेखः। एवं व्याख्यायमानायां स्मृतौ श्रुतिर्व्याकुप्येत्'। व्याकोपोऽत्र विरोध इति गृह्यते। कुपितो हितेन विरोधमाचरति यस्मा असौ प्रकुप्यति। 'दारिद्र्यं हि पर्यायो मरणस्य' इति मृच्छकटिकायाम्। पर्याय इति पर्यायवचन इत्यस्य स्थाने संक्षिप्तं वचः। स च तुल्यार्थकोऽपरः शब्दो भवति मुख्यया वृत्त्या। इह लक्षणया तुल्यार्थे पर्यवसितः। 'वपुरिव यौवनबन्ध्यमङ्गनायाः'। अत्र फलशून्यवचनो बन्ध्यशब्दः शून्यमात्रे भाक्तः। 'महाञ्शापो मुक्तः'। न हि शापो मुच्यते, उच्चार्यते हि सः। परं तदुच्चारणसमकालं जलाञ्जलिमुच्यते, तेन तत्साहचर्याच्छापोपि मुच्यत इति व्यवह्रियते। एवं सति वेदमधीत्य स्नायादिति स्मृतिरनुगृहीता भवति। अत्रानुग्रहः समर्थना भवति। यो ह्यनुगृहीतो भवति स उपस्तब्धो भवति। 'कमपरमवशं न विप्रकुर्युर्विभुमपि यदमी स्पृशन्ति भावाः' इति कुमारे। अत्र स्पर्शेन स्पर्शपूर्वको विकार उच्यते। अत एव कर्तरि घञन्तः स्पर्शशब्दो रोगवचनः। 'मर्माणि स्पृशति'। अत्र स्पर्शविशेषस्तोदनं व्यधनं वाभिप्रेयते। 'बाष्पदुर्दिनान्धकारितदृष्टिः'। अत्र दुर्दिनशब्देन लक्षणया वर्षमुच्यते मुख्यया वृत्त्या तु दुर्दिनं मेघाच्छन्नमहराह। 'गन्धवदगन्धमादनमित्यागन्तुकः पाठः'। प्रक्षिप्त इत्यर्थः। असाम्प्रदायिक इति वा। यो हि सम्प्रदायादागतः स परम्परीणोऽनागन्तुकः। आगन्तुकशब्दो नवं बाह्यं सद्य आगतं चार्थमाह। 'दारुणं तमुदन्तं निशम्य साक्षिणोपि मोहिता किमुत ज्ञातयः'। अत्र साक्षिण इत्यनेन लक्षणया तटस्था उच्यन्ते। यथा व्यवहारेऽर्थिप्रत्यर्थिनोः कतरो जयतीत्यत्रानादरः साक्षिणां तत्र तेषां ताटस्थ्यात्, एवमन्येपि तटस्थाः साक्षिण उच्यन्ते सादृश्यात्। ज्येष्ठे भ्रातरि भ्रियमाणे मृगेन्द्रासनमारोहन्यवीयान्खलु खट्वारूढो भवेत्। खट्वारोहणं विमार्गप्रस्थानस्योपलक्षणम्। सर्व एवाविनीतः खट्वारूढ इत्युच्यते, मुख्यया वृत्त्या तु योऽकाले तल्पं गच्छति ब्रह्मचर्यं च भ्रंशयति स खट्वारूढ इत्यभिधीयते। 'ऋणैः किल समाघ्रातः पुरुषो जायते त्रिभिः'। समाघ्राणं (समन्ताद्घ्राणं) लक्षणयाऽऽक्रमण-

मासादनं वाह। 'नियमविधित्वपक्षस्तु वज्रहस्तेनापि नापहस्तयितुं पार्यते। अपहस्तयते हस्तेन निरस्यतीत्यनर्थान्तरम्। अत्र निरसनमात्र उपचर्यतेऽतितरां च शोभते। 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्'। द्रव्यमयं माणवक इति च। 'द्रव्यं च भव्ये' (५।३।१०४) इति द्रव्यशब्दो भव्येऽर्थेनिपातितः। अयं चास्य गौणोर्थ इति तत्त्वम्। द्रव्यं हि गुणक्रियाधारो भवतीति काणादाः। तत्साम्याद् यदि कश्चिद् गुण्यः कर्मठश्च भवति स उच्यते द्रव्यमिति। 'माणिक्यावलिकान्तिदन्तुरतरैर्भूषासहस्रोत्करैः'। अत्र दन्तुरशब्देनोत्कट उद्भूतो वाऽर्थ उच्यते लक्षणया। उन्नतदन्त इति त्वभिधया। 'कियज्जलमनुभवतीयं कलशी'। अत्रानुभवतिः संभवतिना समानार्थकः। यद्धि येनेन्द्रियेणानुभूयते स तस्य विषयो भवति, जलमपि कलशीकर्तृकाया धारणक्रियाया विषय इति कलशी जलमनुभवतीत्युच्यते साधर्म्यात्। 'अस्य ग्रन्थस्य सुप्रणीतया कयापि टीकया साचिव्यं करणीयम्'। साचिव्यशब्दः साह्यं साहाय्यं वाऽऽचष्टे गौण्या वृत्त्या। सचिवो हि राज्ञा सचते संगच्छते सम्मन्त्रणार्थमिति तथोच्यते। 'ईश इत्ययमनन्यचुम्बितश्चन्द्रचूड तदपि त्वयि ध्वनिः'। चुबि वक्त्रसंयोगे इति पठितो धातुरत्र संयोगमात्रे लाक्षणिकः। 'इदमुज्जृम्भते बिम्बं भानोः'। अत्रोज्जृम्भत उद्गच्छतीत्यनर्थान्तरम्। जृम्भणे हि श्वासोद्गतिर्भवति गात्राणां चोर्ध्वमुखो विनामः। तेनोद्गमनसामान्यमादाय प्रयोगः।

इवतुल्यादय उपमावाचकाः प्रसिद्धाः। अन्येपि गौणवृत्तिव्यपाश्रयेणौपम्यमाहुः। ते कतिपयेऽत्रानुक्रम्यन्ते प्रबन्धचारुत्वस्य प्रकर्षाय। 'चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रं शशी'। 'कुवलयच्छायामुषा चक्षुषा'। संम्प्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेपलीला।' केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी। 'यवसूचिसूत्रसुहृदः सुधांशोः कराः'। 'सब्रह्मचारी नवमेघरुच्याः'। 'गङ्गावर्तसनाभिर्नाभिः। 'भ्रूसूत्रस्य सनाभि मन्मथधनुः।' 'कटाक्षविक्षेपाः शिशुशफरफालप्रतिभुवः'।

जमदग्निप्रतिच्छन्दः सरूपो यः किरीटिनः।
सम्मितो रघुनाथस्य शिवराजो विराजते॥ इति।

निस्त्रिंशः खड्गो भवति। निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति व्युत्पत्तेः। स इवेति निस्त्रिंशः क्रूरः।

त्यक्त्वा सन्तापजं शोकं दंशितो भव कर्मणि (भा०शान्ति० २२।९.)।

दंशितो व्यूढकङ्कट इत्यमरः। अत्र तूद्यतः सज्ज इत्यर्थः।

विदुरो धृतराष्ट्राय गान्धार्याः पाण्डवारणिः। न्यवेदयेतां तत्सर्वं कुमाराणां विचेष्टितम्॥ इति भारतपद्ये (आदि० १३४,३५) पाण्डवारणिशब्देन पाण्डव-

मातोच्यते। यथारणिरग्नेर्योनिस्तथा कुन्ती पाण्डवानामिति तद्धर्मारोपेण तथोच्यते।

मण्डलानि विचित्राणि यमकानीतराणि चेति भारतपद्ये (वन० १९।८) यमकशब्दः सदृशमाह। यमौ यमजौ ह्याकारादिना तुल्यौ भवतः। इवार्थे कः।

संवाससमयो जीर्ण इति भारतस्थे श्लोकचरणे (आदि० १५५।४०) जीर्णशब्दो लक्षणयाऽतिक्रान्तमाह।

निवातम् इति मुख्यया वृत्त्या वाताभावं निरुद्धवातं वा प्रदेशमाह। यथा कुड्यनिवातमित्यत्र। गौण्या तु निराबाधं पार्श्वमाह—राजनिवाते वसति। सुखं मातृनिवातम् इति वाते वातत्राणे (६।२।८) इति स्वरसूत्रे काशिकायाम्। वेदे खल्वपि—निवात एषामभये स्यामेति (तै० सं० ५।७।२।४)। अन्यत्र (अथर्व० ६।५५।२) निवातमिति विशेषणमपि प्रयुक्तं दृश्यते—निवात इद्धः शरणे स्यामेति।

दुर्दिनमिति मेघाच्छन्नेऽह्नि रूढम्। उपचाराद्वर्षेपि वर्तते—मददुर्दिनश्रीः (रघु० ५।४७)। मदस्रुतिसन्ततिर्विवक्षिता। अन्यत्र वृष्ट्यान्धकारितेपि लक्ष्यते—सम्प्राप्ते दुर्दिने काले दुर्दिनं भाति वै नभ इति हरिवंशे (३५७२)। पांसुवर्षेण पतता दुर्दिनं च नभोऽभवदिति (रा० ६।९०।२९)। मकरन्ददुर्दिना······उद्यानभूमय इति प्रबोधचन्द्रे। 'बाष्पदुर्दिनाक्षी' इति दशकुमारचरिते।

नेत्रं नयनं शरीराङ्गमुच्यते। नीयतेऽनेनेति। तद्धर्मारोपादन्योपि पित्रादिर्नेत्रमुच्यते। तथा च भारते प्रयोगः—त्वन्नेत्राः सन्तु ते पुत्राः (२।२४८६)। अत्रेर्ऋषेर्गोत्रापत्यं स्त्री आत्रेयीति व्यपदिश्यते। यथा सा पुमन्तरेणागम्या भवति तथा सद्यो दृष्टरजा रजस्वलापीति साधर्म्याद्रजस्वलाऽऽत्रेयीत्युच्यते। तथा चर्तुमतीपर्यायान्पठत्यमरः—रजस्वला। स्त्रीधर्मिण्यपि चात्रेयी मलिनी पुष्पवत्यपि।

कात्यायनी त्वर्धवृद्धां काषायवसनामधवामाह रूढ्या। मुख्यया वृत्त्या तु कतस्यर्षेर्युवापत्यमाह। औपमिकोऽयं प्रयोगः। कात्यायनीव कात्यायनी, ऋषिपत्न्याकारत्वात्।

ककुदमिति प्रधानादिष्वर्थेषु पठति कोषकारः, तथा ह्यमरे पाठः—प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् इति। वस्तुतो वृषाङ्गमिति मुख्योऽर्थ औपचारिकौ चेतरौ। वृषाङ्गगतमौन्नत्यमादाय ककुदस्यान्यत्र प्रयोगः। शैलशृङ्गेपि ताद्धर्म्यात्प्रयोग उपपन्नो भवति। त्रिककुत्पर्वते इति पाणिनीय शासने यथा।

सामग्र्यमिति मुख्यया वृत्त्या सम्पूर्णतां साकल्यमाह, गौण्या अक्षतत्वं क्षेमं वा। तथा श्रीरामायणे प्रयोगः — अपि लक्ष्मण सीतायाः सामग्र्यं प्राप्नुयावहे (२।१६७।२९)।



अयं हि प्रधानेर्थे भारतगतः प्रयोगः—ककुदं सर्वयोधानां धाम सर्वधनुष्मताम् (६।४९८)।

युद्धातिथ्यं प्रदास्यामि यथाप्राणं निशाचर (रा० ३।५०।२८)। आतिथ्यं यथाऽभ्यागतस्य क्रियत एवं युद्धेन त्वां सत्करिष्यामीति विवक्षितोऽर्थः। आतिथ्यसत्कारसदृशः सत्कार आतिथ्यशब्देनोच्यते।

शारदः शरद्भवमाह मुख्यया वृत्त्या। कोषकारास्तु शारदं प्रत्यग्राप्रतिभयोः पर्यायमाहुः। तथा चामरः पठति—द्वौ तु शारदौ। प्रत्यग्राप्रतिभाविति। शरदुपेतायां शाम्यति रजः, आश्यायते पङ्कः, प्रसीदति सलिलम्, निर्धौतमिव विभाति गगनमिति शारदं सर्वं नवमिव भवति। तेन शारदशब्दो नूतनमर्थमुपसङ्क्रान्तः। शारद इव शारद इत्यौपमिकः प्रयोगः। अत एव सद्योरज्जूद्धृतं प्रत्यग्रमनुपहतमुदकं रज्जुशारदमुच्यते।

अपपूर्वो राधिरपक्रियायामागस्करणे प्रतिकूलाचरणे वा रूढः। अतः यस्मिन्कस्मिन्नपि पूजार्हेऽपराद्धा शकुन्तला। (शाकुन्तले ४)। अपराद्धोसि तत्र भवतः कण्वस्य (शाकुन्तले ७), किम्पुनरसुरावलेपेन भवतीनामपराद्धम् (विक्रमोर्वशीये १) इत्यादयः प्रयोगाः प्रथन्ते। अत्रापराधिरपक्रियादिचेतनधर्ममाह। निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् इति माघवाक्ये (२।२७)ऽसावचेतन इषावध्यारोपित इति चारुत्वमारोपितः प्रयोगः। अत्र निमित्तादित्यतिरिक्तम् अनर्थकम्। अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायक इत्यमरे निमित्ताच्च्युतिलक्षणस्यापराधस्यापराद्धशब्देनैवावगतेः। अपराद्धाऽभिषेकवेलोपाध्यायस्येति विक्रमोर्वशीयेऽपराद्धेत्यतिक्रान्तेत्याह। मुख्यया वृत्त्या त्वपराद्धा हिंसिता भवति। मनोज्ञ इति मुख्यया वृत्त्या मनसो ज्ञातारमाह तथा च भारते प्रयोगः—तथैव सहदेवोऽयं सततं त्वामनुव्रतः। न जातु विनिवर्तेत मनोज्ञो ह्यहमस्य वै (वन० १४०।१४)। अभिरूपोऽर्थोपि द्रष्टुर्मानसं प्रविश्य जानातीवेति मनोज्ञ उच्यते।

अन्यत्रापि चेतनधर्मस्याचेतने सङ्क्रान्तिर्लक्ष्यते सुभगा—न मे मूढा दिशः पाप त्वदर्थं मे विलम्बितम् (भा० वन० १५७।४८)। अत्र वक्त्रा स्वगतो मोहो दिक्षूपचरितः।

अन्तरमवकाशो भवति कालकृतो वा दिक्कृतो वा। तेनानन्तरमित्यनवकाशमव्यवहितमाह। अव्यवहितेर्थे प्रथन्ते प्रयोगाः। प्रातिवेश्य इत्यनन्तरगृहवासी भवति। राम इति दशरथस्यानन्तरापत्यम्। यच्चाव्यवहितं भवति तदत्यन्ताय संनिहितं भवति। तेनानन्तरशब्देन सामीप्यं लक्ष्यते। तेन च सौलभ्यम्। तथा च प्रयोगः—प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च (भा० वन० २०९।४२)।

अदूरवर्तिनी सुलभेत्यर्थः। काये चानन्तरोऽभवत् ( भा० वन० २८०।७ ) इत्यत्रानन्तरः संलग्न इत्यनर्थान्तरम्।

दाण्डाजिनिको दाम्भिको भवति। तत्कस्मात्। दण्डश्चाजिनं च दण्डाजिनम्। यतीनां लक्ष्मभूतमुपकरणम्। तच्च दम्भार्थमपि सेव्यत इति दम्भार्थं सङ्क्रान्तम्। दण्डाजिनेन दम्भेनान्विच्छत्यर्थानिति दाम्भिकः। गौणार्थकादेव दण्डाजिनशब्दात्प्रत्ययविधिरित्यपि स्थितमाकरे।

न हि सहजेन प्रातिभेनालंकृताः पूर्ववासनानुगृहीता एव सुकृतिनः सिध्यन्ति प्रसन्नगम्भीरेषु वाचां गुम्फेषु, किन्त्वपरेऽपि वाक्परिशीलनप्रसिताः कामपि सिद्धिमधिगच्छन्तीत्यभिप्रायकं श्रीदाण्डिनो वचः समुद्धृत्य प्रकृतमुपसंहरामः—

"न विद्यते यद्यपि पूर्ववासनागुणानुबन्धि प्रतिभानमद्भुतम्।
श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्॥" इति॥

## पर्यायवचनविवेकः

पर्यायवचनविवेकश्चिरस्य लुप्त इति व्यवहारे मुह्यति लोकः। यत्र तत्र प्रयोगसाङ्कर्यमक्षिलक्षीभवतीति व्यवहारनिरूपणेऽस्मिन्ग्रन्थे पर्यायविवेचनमवसरप्राप्तमिति तदारभ्यते—

के नाम पर्यायवचनाः। ये पर्यायेणार्थं ब्रुवन्ति ते पर्यायवचनाः। पर्यायो नाम परिपाटी क्रमः। इदमुक्तं भवति—ये शब्दा असंनियुक्ता असहोच्चारिता एकार्थस्य वाचकास्ते पर्यायवचनाः समाख्यायन्ते। इदं चातोऽर्थादापद्यते य एकार्थका इति कोषेषु पठिता लोके वा तथात्वेन परिगृहीतास्ते चेद्युगपद्वाक्ये प्रयुक्ताः स्युर्नैकार्थकाः स्युः। अवश्यं तत्र विशेषेण केनापि भवितव्यमनिर्ज्ञातेन। अर्थगत्यर्थो हि शब्दप्रयोगः। अर्थस्य चैकेन सम्प्रत्ययादितरस्य वैयर्थ्यप्रसङ्ग इति सुव्यवस्थितः पर्यायवचनानां सममप्रयोगः।

विभूर्मात्रा प्रभूः पित्राऽश्वोसि हयोस्यत्योसि मयोस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असीति वाजसनेयके (२२।१९) श्रूयते। अत्राश्वो नाम चतुष्पाज्जातिविशेषः कैरपि नामभिस्तोष्टूयते हयादिभिरिति विवरीतारः। यदि चेहाश्वेन संनियुक्तानां हयादीनामत्यन्ताया विशेषस्तदा नार्थोऽनेनाश्वस्तवेन। यदि हयादयोऽभ्युच्चीयमाना अर्थाभ्युच्चयाय न प्रकल्पेरंस्तदाऽनुलपितमेतत्प्रलपितमिव स्यात्। न ह्यश्वोऽस्यश्वोस्यश्वोसीति साम्रेडमुच्यमानं वचः स्वदते नाम, न वा वाक्सरणीं लौकिकीमनुसरति। तेनात्राश्वजात्यनतिक्रमेऽपि हयादीनां

गुणक्रियाविशेषाद्विशेषोऽभिधित्सितः। यस्तावदश्व आशीयोध्वानमतियाति निरन्तरं च प्रयाति न च क्लमथं याति स हयो वाऽत्यो वेत्युच्यते। यश्च संगरेषु रथस्य वोढा सन्नरीन् हिनस्ति स उच्यतेऽर्वेति। यः पुनः सैन्येन सपति संगच्छते स सप्तिरिति व्यपदिश्यते। यश्च वीर्यवान् पुष्कलवीजशक्तिः स वाजीति वा वृषेति वाभिलप्यते। एवं व्याक्रियमाणे तस्मिन् यजुषि सर्वं सुस्थं भवति। प्रत्यर्थं शब्दनिवेशाद्यावतामर्थानामभिधानं तावतां प्रयोगो न्याय्य इति भाष्योक्तदिशाऽर्थाधिक्ये शब्दाधिक्यं च निर्दुष्टं भवति।

इहाम्नायवचने हयादीनां यः परस्परमर्थभेदः स गच्छता कालेन तिरोहितोऽभूदिति ते हयादयोऽश्वार्थे निर्विशेषं प्रयुक्तास्सन्तः पर्यायतामयुः। गुणवचनेषु तु बहुलमेतदभूदिति शक्यं न्यक्षेण निदर्शयितुम्। वेदे तावद् वाजिशब्दोऽत्यविशेषणमश्वविशेषणं वा प्रयुक्तः—अत्यं न वाजिनम् ( ऋ० १।१२९।२ ), अश्वं न वाजिनम् ( ऋ० ७।७।१ ) इत्यत्र यथा। एवं सप्तिशब्दोप्यत्यं विशिंषन्दृष्टः—अत्यं न सप्तिम् ( ऋ० ३।२२।१ ) यथा। मह्युर्वीपृथिव्यादीनां मिथो विशेषणविशेष्यभावेन दाशतये प्रायिकः प्रयोगः। तद्यथा—उर्वीं पृथ्वीम् ( ऋ० ७।३८।२ ), यथेयं पृथिवी मही दाधार ( ऋ० १०।६०।९ ), उनत्ति भूमिं पृथिवीमुत द्याम् ( ऋ० ५।८५।४ )। कालेनोर्व्यादीनि विशेषणानि विशेष्यार्थे समर्पयन्ति पृथिव्यादिभिः पर्यायवचनतामगुः। अध्वरशब्दो लोके यज्ञपर्याय इति परिगृहीतो वेदे यज्ञविशेषणं दृश्यते। तद्यथाग्नेयं यज्ञमध्वरं विश्वतः परिभूरसि ( ऋ० १।१।४ )। न ध्वरति न हिनस्तीत्यर्थयोगादध्वरशब्दोऽहिंसकमाह। यस्मात्सर्वोपि यज्ञोऽविशेषेण यजमानमवति, तमपायात्पाति, न हिनस्तीति यावत्, तस्मात्सोऽध्वरोऽभूत्। स्वेनैव च विशेष्यार्थमर्पयन्यज्ञपर्यायतामयात्। लोकेपि चैवं बहुधा विलोक्यते। तद्यथा। सानुमानिति पर्वतपर्यायः पर्वतनामस्वमरादिभिः पठ्यते। अयमपि पुरा पर्वतविशेषणमपि प्रयुयुजे, उत्तुङ्गशिखरं चाचचक्षे। तथा चादिकवेः प्रयोगः—आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ( रा० २।४८।१० )। विहङ्ग इति पक्षिनामसु पठ्यते। अयमपि विहायसा गच्छतीत्यर्थसमाश्रयेण पक्षिविशेषणं प्रयुज्यते पुरा। तद्यथा। तां विनाथ विहङ्गोऽसौ पक्षी प्रणदितस्तदा ( रा० ४।१। ५५ )। अंशुमानिति सूर्यनामसु पठ्यतेऽभिधानकोषेषु। पुरा सूर्यविशेषणत्वेनाप्यस्य प्रयोगो बभूवेति स्पष्टं श्रीरामायणे। तद्यथा। उद्यतोंशुमतः काले खं प्रभेव विवस्वत ( २।३९।१८ ) इति। शाखी विटपी पलाशीति वृक्षनामसु पठयन्ते। अमी चापि शब्दा वृक्षविशेषणभावेन प्रचुरं प्रयोगमवातरन्निति शक्यते निदर्शयितुम्। तथा च भारते प्रयोगः—पलाशिनं शाखिनं च तथा विटपिनं पुनः। तं दृष्ट्वा जीवितं वृक्षं

काश्यपेन महात्मना ( आ० आस्तीक पर्वणि ४३।१०।११ ) ॥ गहनमिति दुष्प्रवेशार्थमभिधाय वनमात्राभिधानेपि शक्तं भवति । उभयथा हि प्रयोगा दृश्यन्ते । एवं चात्र क्रम ≍ प्रतिभाति—आदौ केवलं यौगिकाश्शब्दाः कालपर्ययेण योगरूढा भवन्ति । तत्र विशेष्यसाहचर्यं तद्धेतुका प्रसिद्धिर्वा निबन्धनं भवति ।

क्वचिदुपमानान्यपि केवलानि प्रयुक्तान्युपमेयैः सहैकार्थतां यान्ति विशेष्याणि वा विशेषणैरिति विपरीतोपि क्रमो लक्ष्यते । घन इति मेघपर्यायेषु पठ्यते । तथा चामरेण तेऽनुक्रम्यन्ते—घनजीमूतमुदिरजलमुग्धूमयोनय इति । मूर्तौ घन (३।३।७७) इति घनशब्दः पाणिनीये निपातितः । मूर्तिश्चास्यार्थो निर्दिष्टः । मूर्तिर्नाम काठिन्यम् । यदा च धर्मशब्देन धर्मी भण्यते तदा घनं दधीत्यपि भवति । कठिनं संशीनमित्यर्थश्च । यथार्थान्तरं दध्यादि घनं भवति तथाऽभ्रमपि । तादृशे संश्लिष्टावयवेऽम्मये जीमूते विवक्षितेऽभ्रघन इति प्रयोगोऽभूदिति शक्यमनुमातुम् । पश्चात्साहचर्येण निरूढिं गतेर्थे घनशब्दः केवलोऽभ्रपरिहारेणापि तदर्थं प्रवृत्तोऽभिधातुम् । इयं चानुमाऽऽदिकवेः प्रयोगेण समर्थ्यत इति सर्वं निर्विचिकित्सं स्थितं भवति । तथा श्रीरामायणे (५।५७।२८) प्रयोगः—तमभ्रघनसंकाशमापतन्तं महाकपिम् । अभ्रं घन इवेति विग्रहो द्रष्टव्यः । घन इत्यस्य कठिनसंघात इति चार्थः । अभ्रस्य घनो मूर्त्तिरित्येवमपि शक्यं विग्रहीतुम् । यथानन्दघन इति वा सैन्धवघन इति वा । तत्रापि षष्ठ्यन्तं विशेषणं भवतीति विशेषणमन्तरेणापि केवलो घनशब्दो घनं सान्द्रमभ्रमाह । तथा चेदानीन्तनाः पञ्चनदीयाः कुङ्कुमकेसर इत्यस्य स्थाने केसर इत्येव व्यवहरन्ति विशेषणपरिहारेण ।

क्वचिद्विशेषवाची शब्दः सामान्यवाचिना समं प्रयुक्तः केवलं विशेषणार्थे पर्यवस्यति । तद्यथा । कान्तारो हि महारण्यमाह प्रथमया वृत्त्या । परं वनेन संनियुक्तो दुष्प्रवेश इत्येवार्थमर्पयति । तथा च भगवतो वाल्मीकेः प्रयोगः—बहुदोषं हि कान्तारं वनमित्यभिधीयते (रा० २।२८।५) ।

सामान्यस्य विशिष्टार्थोपसङ्क्रमोपि दृश्यते । गरुदिति पक्षनाम । गरुत्मानिति पक्षिपर्यायः । तथा चामरः—नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमा इति समानार्थकान्परिपठति । पक्षिसामान्यवचन एष गरुत्मच्छब्दः कालपरिवासेन पक्षिविशेषे सुपर्णे रुढिं गतोऽतिशयविवक्षया । अपशवो वान्ये गो अश्वेभ्यः । पशवो गोश्वा इति ब्राह्मणे चात्र वचनभङ्ग्यनुसृता भवति । एवं ह्यभिप्रयन्ति तत्र वक्तारः—अयमेको गरुत्मान्यो जविष्ठः पतताम् अन्ये गरुत्मन्तोप्यगरुत इवेति ।

विपरीतोपि क्रमो लक्ष्यते—वाहिनी पृतना चमूरनीकिनीत्यादयः सैन्यविशे-

षस्य नामधेयानि सन्तोपि विशेषाविवक्षायां सेनासामान्यमभिदधानाः परस्परं पर्याया भवन्ति ।

एवं पर्यायाणां विकासे दिङ्मात्रं प्रदर्शिते तेषां प्रतिनियतविषयतामधिकृत्य किञ्चिदुच्यते—आह च भाष्यकारः—नियतविषया शब्दा दृश्यन्ते । तद्यथा । समाने रक्ते वर्णे गौर्लोहित इति भवत्यश्वः शोण इति । समाने च काले वर्णे गौः कृष्ण इति भवत्यश्वो हेम इति । समाने च शुक्ले वर्णे गौः श्वेत इति भवत्यश्वः कर्क इति । रक्तादयः शब्दाः शोणादिभिः समानार्था विविच्यन्ते सूरिभिः । तथा च बन्धुजीवजपासन्ध्याच्छायावर्णे मनीषिभिः । शोणरोहितरक्तानां प्रयोगः परिकीर्तितः ॥ इति भागुरिमुदाहरत्यमरव्याख्यायां सर्वानन्दः । इन्धनं त्वेध इध्ममेधः समित्स्त्रियामित्यमर इन्धनादीनां पर्यायवचनतायामपि समिदिध्मयोस्तु होमीय इन्धन एव बहुलः प्रयोग इति वाग्योगविदः ।

आभिधानिकैः पर्यायवचनतया संपठिताः शब्दा येनाभिप्रायेण तथा पठितास्तमित्थङ्कारमभ्यूहन्ति प्राञ्चः—तमालपत्रतिलकचित्रकाणि विशेषकमित्यत्रामरे तमालपत्रादीनां चतुर्णां पर्यायत्वमन्तरेण तमालपत्राकृति कस्तूर्या ललाटे तमालपत्रम् । तिलकाकृति तिलकम् । चित्रकं नानावर्णम् । विशिनष्टि विशेषकम् । इत्थं तिलकभेदा एते । पर्यायत्वं त्वदूरविप्रकर्षादिति स्वामी स्माह । अन्यत्र च आकारस्त्विङ्ग इङ्गितमित्यमरं व्याचक्षाणः स एवाह । इङ्गिताकाराभ्यां भावज्ञानमित्यादौ गोबलीवर्दन्यायेन इङ्गितं चेष्टितम् आकृतिग्रहणमाकारो मुखरागादिरिति कौटिल्यो व्याख्यत् । अथ त्वनयोराशयज्ञापकत्वादैक्यं मन्यत इति ।

अयमत्र निष्कर्षः । ये खल्वभिधानकोषेषु समानार्थका इति परिपठिताश्शब्दास्ते नात्यन्ताय समानार्थका भवितुमर्हन्ति, भिद्यते हि तेषामर्थः कयापि कलयेति । यथेक्षुक्षीरगुडादीनां माधुर्यं सान्तरं सदपि न तथा विभाव्यते न वा वाचा प्रणिगद्यते भेदस्यातिसौक्ष्म्यात्, तथा समानार्थकानामप्यवान्तरो विशेषो भवति, न च लक्ष्यते, सौक्ष्म्यादिति तल्लक्षणे प्रकृतो यत्नः । तत्र च न वयमुत्प्रेक्षामात्रसचिवाः प्रमाणान्तरनिरपेक्षाः प्रवर्तितुमर्हामः । तथाजातीयका नः प्रवृत्तिः प्रज्ञानां प्रीतये प्रतीतये वा न स्यात् । तेन संस्कृतं वाङ्मयमवगाह्मवगाहं यद्यत्प्रकृतोपयोगि शिष्टवचनं पश्यामस्तत्तदिह समामनामः, यथावसरं यथामनीषं विमर्शं च निजं प्रवर्तयामः ।

सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वतीत्यमरे सत्यऋते समानार्थके पठिते । ऋतं वदिष्यामि । सत्यं वदिष्यामीत्यत्र तैत्तिरीयोपनिषदि तु स्पष्टं नानार्थे । तत्र ऋतं यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितमर्थम् । सत्यमिति वाक्कायाभ्यां सम्पद्यमान इति शाङ्करं भाष्यम् । कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम् ।

सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इत्यैतरेयब्राह्मणे ( १।६ ) ऋतं वाव दीक्षा । सत्यं दीक्षेत्यैतरेयब्राह्मणश्रुतिं व्याचक्षाण ऋतसत्ये इत्थं निरूपयाञ्चकार भट्टभास्करः—मानसमर्थतथात्वमृतम् । वाचिकमर्थतथात्वं सत्यमिति । गोविन्दस्वामी तु यथार्थवादित्वमृतम् । यथार्थदृष्टवादित्वं सत्यमित्येवं प्रोवाच ।

यशः कीर्तिः समज्ञा चेत्यमरेण यशःकीर्तिशब्दौ पर्यायवचनौ समुपन्यस्तौ । साहित्ये तु वाक्येषु समं प्रयुक्तौ दृश्येते इति पर्यायता विहन्यते । तथा च जैमिनीयोपनिषदि प्रयोगः—तस्मात्तप्यमानस्य भूयसी कीर्तिर्भवति भूयो यश इति ( २।१।१३ ) । श्रीरामायणेप्यनेकत्र सहप्रयोगो विलोक्यते । तद्यथा । तेनेहास्यातुला कीर्तिर्यशस्तेजश्च वर्धते ( २।२।३३ ) । तत्र तिलककारो रामः कीर्तिः शौर्यादिजा यशो दानादिजा प्रसिद्धिरिति तयोर्विशेषमाह । अन्यत्र च रामायणे न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ( ६।२।१६ ) इत्यत्र पद्येऽसावेवं विविङ्क्ते—कीर्तिर्देशान्तरख्यातिः यशः स्वदेशख्यातिरिति । अत्रैकतरं व्याख्यानं प्रमाणमुभयं वाऽनुभयं वेति नार्हामो वक्तुम् । मनुसंहितायामप्येतयोः साहचर्येण प्रयुक्तिरुपलभ्यते । तद्यथा । इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाः पशून् ( ११।४० ) इति । तत्र जीवतः ख्यातिरूपं यशः । मृतस्य ख्यातिरूपां कीर्तिमिति कुल्लूकव्याख्यानम् । नेदं सर्वत्र घटत इति न वेद्या विदां वराः । तथा हि भगवद्गीतासु अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययामिति पद्ये जीवत एवाकीर्तिर्मरणान्मरणदुःखादपि सुदुःसहा भवतीति निगदत एव स्पष्टा प्रतिपत्तिः । मृतस्य सतः सम्भावितस्य जनस्याकीर्तेर्मरणातिरेकोऽकिञ्चित्कर इति तदुक्तिरनर्थिका स्यात् । यावद्धि प्रथते लोके पुरुषस्य यशो भुवि । तावत्तस्याक्षया कीर्तिर्भवतीति विनिश्चिता ( भा० शा० ५४।३२ ) ॥ इति पद्यं व्याचक्षाणो भारतभावदीपकारो नीलकण्ठ आह—यशः परोचतच्चमत्कृतिजनको गुणौघः । कीर्तिः साधुतयाऽन्यैः कथनम् इति । इह यत्नेनोद्भावितो भेदो प्यभेद एव पर्यवस्यतीति नातितिरोहितं सूक्ष्मदृशाम् ।

परीवादापवादौ प्रायेण पर्यायौ परिगृह्येते । तत्रापि सहप्रयोगः पर्यायत्वापघातको दृश्यते । तथा च श्रीरामायणे प्रयोगः—परिवादोऽपवादो वा राघवे नोपपद्यते ( २। १२।२७ ) । तत्र रामष्टीकाकार एवं तयोर्भेदं निब्रूते—परिवादोऽकार्यकरणनिमित्तं समूलमयशः । अपवादोऽसूयाकल्पितं निर्मूलमयशः । गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तत इत्यत्र मनौ विद्यमानदोषस्याभिधानं परिवाद इति कुल्लूकः । परिवादः सम्भूतदोषानुकथनम् । निन्दाऽविद्यमानानां दोषाणामभिधानमिति च मेधातिथिः ।

तीर्थेऽस्मिन् तदानुपूर्वीको ग्रन्थः स्थितः ।

दीप्तिकान्तिद्युतयोऽदूरविप्रकर्षात्पर्यायाः, वस्तुतस्तु भिन्नार्था इत्यत्र शिष्टप्रयोगाः प्रमाणम्। तथा च भारत आदिपर्वणि तत्तद्विषयतापरिच्छेदेन तेषां प्रयोगः—दीप्तिकान्तिद्युतिगुणैः सूर्येन्दुज्वलनोपम (१८।३) इति। अन्यत्र च भीष्मपर्वणि—उभौ चन्द्रार्कसदृशौ कान्त्या दीप्त्या च भारत (११।३०) इति। अन्यत्रापि काव्यनाटकेषु सूर्यादीनां दीप्त्यादिभिरव्यभिचरितः सम्बन्धो विलोक्यते प्रयोगनियमश्च विज्ञायते। तद्यथा। उस्रैः सर्वैः समग्रस्त्वमिव दीप्यते सप्तसप्तिरिति विक्रमोर्वशीये। कला च सा कान्तिमती कलावत इति च कुमारे। अत्र तेजस्तारतम्यमेव विषयभेदे हेतुः। सूर्यस्य तेजश्चक्षुरुपहन्तीत्यसह्यं भवति, तदुच्यते दीप्तिरिति। चन्द्रस्य प्रभा कमनीया भवतीति साऽभिधीयते कान्तिरिति। ज्वलनो नामार्चिष्मान्भवति, विरम्य विरम्य च ज्वलत्येवेनेति पुनः पुनः प्रीणितः सन्निति स उच्यते द्योतत इति। यथा तारका द्योतन्ते यथा वा विद्युद्विद्योतत इति। ताभिः सामान्यं किञ्चिदादाय सूर्यचन्द्रयोः प्रकाशाद् विशेषं कञ्चिदाख्यातुं तथा प्रयोगो भारते। नायं नियमः सूर्यादीनां कर्तृतायां तत्सम्बन्धे वा दीप्यतिप्रभृतीनां धातूनामेव प्रयोगो भवतीति, धात्वन्तरप्रयोगस्य बहुलं दर्शनात्। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरित्यत्रैकेन भातिना सूर्यादीनामन्वयदर्शनात्।

कोपक्रोधावभिन्नार्थाविति प्रायेणाभ्युपेयते। तदुनुपपन्नम्। क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप (१।४।३७) इति सूत्रे भाष्ये नानार्था एते कुपौ त्वेषां सामान्यम्। न ह्यकुपितः क्रुध्यतीत्युक्तम्। तत्र कोपक्रोधयोर्विशेषमभिप्रैति भाष्यकारः। तं च विशेषमित्थमुन्नयति कैयटः—ननु कोपः क्रोध एवेति भेदाभावात्कथं पौर्वापर्यम्। एवं तर्हि प्रथमामनुद्भूतां कोपावस्थां द्वितीयां चोद्भूतां विकृतवाक्कायव्यापारानुमीयमानामाश्रित्यैतदुक्तमित्यदोषः। एतच्च 'प्रतिकूलेषु तैक्ष्ण्यस्य प्रकर्षः क्रोध उच्यते' इत्यभियुक्तोक्त्या बलवत्समर्थ्यते। क्रोधो विक्षिप्तचित्ततेति शान्तिपर्वणि (२१३।४) नीलकण्ठभणितिरप्यत्रानुगुणा।

अमर्षरोषावपि विविच्येते अर्थतो विचक्षणैः। मालतीमाधवे (पृष्ठे ९० तमे) ऽमर्षरोषाविति द्वन्द्वनिर्देशः समुपलभ्यते। तत्र टीकाकारो जगद्धर इत्थं विशेषं निर्वक्ति—अमर्षरोषौ अक्षमाक्रोधौ। यद्वा स्थिरक्रोधतात्कालिककोपौ। यथाहुः—क्रोधः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते रोषस्तात्कालिकः कोप इति। इदं च निरवद्यं भाति। क्षणे रुष्टः क्षणे तुष्टो रुष्टस्तुष्टः क्षणे क्षण इति हितोपदेशस्थे पद्ये वाक्यार्थे विमृश्यमाने रोषस्तात्कालिकः कोपो भवतीति न दुष्करमुन्नेतुम्।

मित्रं सखा सुहृदिति समानार्थकानि नामानि परिपठति कोषकारः। विशेषज्ञास्त्वत्र विशेषं विजानन्ति। प्रथते च प्राचामुक्तिः—अत्यागसहनो बन्धुः सदैवानुगतः सुहृत्। एकक्रियं भवेन्मित्रं समप्राणः सखा मतः॥ इति। यदत्र मित्रलिलक्षयिषयोक्तं तत् तन्मित्रमापदि सुखे च समक्रियं यद् इति हर्युक्त्या संवादात्सुष्ठूपपन्नं भवति। भारते शान्तिपर्वणि (१७४।२८) असुहृत्सुहृच्चापि सशत्रुर्मित्रवानपीति पठ्यते। तत्र मित्रसुहृदोर्भेदेनोपादानमिति व्यक्तम्। तं च भेदमित्थं विवृणोति भावप्रदीपे नीलकण्ठः—सुहृत्प्रत्युपकारमनपेक्ष्योपकारकर्ता। मित्रं प्रत्युपकारमपेक्ष्योपकारकर्तृ। इदमत्रावश्यवाच्यं सुहृच्छब्दसंनियोगेन मित्रशब्द इदमर्थाभिधायी भवति सुहृच्छब्दार्थपारिशेष्यात्। न तु मित्रशब्दः सर्वत्र प्रत्युपकारापेक्षयोपकर्तरि रूढः। यच्च प्राचीनैः सखिशब्दमुद्दिश्य समप्राणः सखा मत इति परिभाषितं तत्क्वचिदेवावितथम्। बाढं शाकुन्तले षष्ठेऽङ्के मधुकरिकायाः परभृतिकां सखीं प्रति 'एकमेव नौ जीवितं द्विधा स्थितं शरीरम्' इत्युक्तिस्तस्यार्थस्य पोषिका भवति। प्रायशश्च सखिशब्दः सहचरमाह सहायं वा। तथा च कवीनां प्रयोगाः—वनेचराणां वनितासखानाम् इति कुमारे (१।१०), सचिवसख इति रघौ (४।८७)। मरुत्सखाभमिति च। समानं ख्यातीति सखेति व्युत्पत्तेर्ययोर्द्वयोः शीलादि समानं भवति तयोरेव सखिभाव इत्यभ्युपगमाच्च समानावस्थितिकाः समानव्यवस्थितिकाश्च परस्परं सखायो भवन्ति। अयं चार्थो भारत आदिपर्वणि द्रोणोद्देश्यया द्रुपदोक्त्या साधीयः समर्थ्यते। एवं हि सोऽवादीत्—नाऽश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा। नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते (१६६।१५) इति।

गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिरिति पर्यायवचनाः। तत्र गर्वमधिकृत्य पूर्वाचार्यवाक्यमुदाहरति सर्वानन्दः—गर्वो नाम कुलैश्वर्यरूपविद्याबलादिभिः। इष्टार्थविषयप्राप्तेर्जायते नीचगोचरः॥ इति भारते शान्तिपर्वणि (२१३।४)। क्रोधात्काममवाप्याथ लोभमोहौ च मानवाः। मानदर्पावहंकारमहंकारात्ततः क्रियाः॥ इति स्मर्यते। तथा मानदर्पाहंकाराणां पृथङ् निर्देशोऽर्थभेदस्य प्रकल्पक इत्यभिव्यक्तम्। तमर्थभेदमित्थमुद्भावयति नीलकण्ठः—मान आत्मनि पूज्यताबुद्धिः। दर्प उच्छृङ्खलत्वम्। अहंकारः परेषां तुच्छीकरणमिति। यश्चात्र मानशब्दार्थ उक्तः स व्युत्पत्तिलभ्य इति प्रमाणान्तरं नापेक्षते। अभिमानोऽपि विशिष्टः स एव। दर्पशब्दोऽपि यथातथं व्याख्यातः। कन्दर्पो दर्पकोऽनङ्ग इति कामनामानि। कामाविष्टो हि दृप्यत्युच्छृङ्खलो भवतीति सार्वलौकिकम्।

तर्जनं भर्त्सनं च समानाभिधेये इति भूम्ना व्यवह्रियेते। तथा च तर्ज भर्त्स भर्त्सन इति। अत्रापि विशेषः कश्चित् समस्ति। श्रीरामायणेऽनयोः सहप्रयोग-

दृष्टेः। तद्यथा। तर्जापयति मां नित्यं भर्त्सापयति चासकृत् (६।३३।९) इति। तत्रैवं विविङ्क्ते तिलककारः—अवाचिकी भीषिका तर्जनम्। वाचिकी तु सा भर्त्सनमिति। इदं च हृदयङ्गमम्। तथा हि भष भर्त्सन इति पठ्यते न तु भष तर्जन इति। आगन्तुमुपसर्पन्तं निशाम्य वाचा भीषयते श्वा न तु काय-व्यापारेण। प्रदेशिनी नामाङ्गुलिस्तर्जनीति संज्ञान्तरेणोच्यते न तु भर्त्सनीति विभी-षिकायां वाग्व्यवहाराभावात्। अत एवामरः शब्दवित्तम×पपाठ—भर्त्सनं त्वप-कारगीरिति।

केयूरमङ्गदं तुल्ये इत्यमरे पर्यायवचनतया पठिते। परं रामायणे भारते चानयोः सहप्रयोगदर्शनान्नैते समानार्थके इति शक्यमध्यवसातुम्। रामायणे तावत्—अङ्गदानि च चित्राणि केयूराणि शुभानि चेति दृश्यते। तत्राङ्गदं बाहु-मूलधार्यं भूषणम्। केयूरं तदधोभागस्थमिति तिलककारः। भारत उद्योगपर्वणि चाप्येनयोर्भेदेनोपादानं विलोक्यते। तद्यथा। अङ्गदैः पारिहार्यैश्च केयूरैश्च विभूषि-तान् (१६२।१६) इति। तत्रैव भीष्मपर्वण्यङ्गदकेयूरयोः साहचर्येण पाठ-स्तयोः पर्यायतां व्याहन्ति—काञ्चनाङ्गदकेयूरैः कार्मुकैश्च महारथाः (१७।१७) इति।

विलापः परिदेवनमिति परस्परेण समानार्थकं द्वयं कोषेषु। अत्रापि विशेषः कश्चिदस्ति स वक्तव्यः। परिदेवनमिति चौरादिकाद् दिव परिकूजन इति धातो-र्व्युत्पद्यते कूजनं रोदनं चास्यार्थः। कूजति रोदितीत्यनर्थान्तरम्। अङ्गात्प्राति-लोम्ये (८।१।३३) इति सूत्रे अङ्ग कूज वृषल, इदानीं ज्ञास्यसि जाल्मेति प्रत्यु-दाहरणे तदर्थावगतेः। विलाप इति तु लप व्यक्तायां वाचीत्यस्मात्तेनैतयोरर्थभेदः स्फुटः। तथा चैतयोः पृथगर्थतया रामायणे प्रयोगः—विलपितपरिदेवनाकुलं व्यसनगतं तदभूत्सुदुःखितम् (२।३९।४१)। तत्र विलपितं रामगुणकैकेयीदुर्गुण-प्रतिपादकं वाक्यम्। परिदेवनं रोदनमिति रामकृता विवृतिः।

पिशुनसूचकौ समार्थकौ प्रतिपद्येते। तथा च धातुपाठः सूच पैशून्य इति। भृगुप्रोक्तायां मनु संहितायां तु भिन्नार्थकतया प्रयुक्तौ। पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् (११।५०) इति। तत्र पिशुनो विद्यमानदोषाभिधायी। सूचकोऽविद्यमानदोषाभिधायक इति कुल्लूको विशेषमाविष्करोति।

सिकताशर्करावालुकानां प्रायेण व्यतिकीर्यन्ते प्रयोगाः। अस्तीह सामान्यं भेदश्च। भारते शान्तिपर्वणि भूमिपाषाणसिकताशर्करावालुकाभस्मशायिन इति प्रयोगो लक्ष्यते। तत्र सिकताः सूक्ष्मपाषाणपांसवः। शर्करा कर्करसहिता मृत्। वालुका लघूपलमिश्राः सिकता एवेति भारतभावप्रदीपे नीलकण्ठः।

मुत्प्रीतिः प्रमदो हर्ष इति हर्षनामस्वमरः। मुत्प्रमोदयोस्तु प्रत्ययो भिद्यते न प्रकृतिः। तेनानवकाशोऽर्थभेदः। प्रमोदामोदयोश्चाप्युपसर्गौ भिद्यते केवलं न प्रकृतिर्न वा प्रत्ययः। तस्मात्तयोरप्यर्थवैशिष्ट्यं न। इदानीं विचार्यते प्रीतिहर्षप्रमोदानां परस्परं को विशेष इति। इदानीं तावदभ्युपेयं प्रीतिर्नाम सामान्यस्तोष इति। अस्ति खलु मोदहर्षयोर्भेद इति श्रीरामायणे 'न चाहृष्यन्न चामोदन् वणिजो न प्रसारयन्' (२।४८।४) इत्यत्र स्पष्टम्। तत्र हर्षः शारीरो मुखविकासादिरूपः। मोद आन्तरो हर्ष इत्येवं विविनक्ति रामायणतिलके रामः। परं नायं विवेकः साधुर्भवतीति प्रतीमः। चरके विमानस्थानेऽनुमानज्ञेयान् भावान्प्रकृत्याह-तत्र क्रोधमभिद्रोहेण, शोकं दैन्येन, हर्षमामोदेन, प्रीतिं तोषेण······विद्यात्। आमोदो गीतवादित्राद्युत्सवकरणम्। तोषो मुखनयनप्रसादादिः, तेन प्रीतिस्तोषमात्रम्। हर्षस्तु प्रीतिविशेषो मनउद्रेककारक इति चक्रपाणि र्व्याचष्टे। इय मेव च साध्वी व्यमृत्या। मूल आमोदेत लिङ्गेन हर्षमनु मिमीतीतेत्युक्तेः। यदि नाम हर्षो रामस्याभिमतः शारीरो मुखविकासादिरूपः स्यान्नासावनुमेयः स्यात्। प्रत्यक्षमुपलब्धेः। आमोदे हर्षलिङ्गत्वमपि नोपपत्तिमत्स्यात्। तेन रामोक्ती रभसोक्तिरिति नादृत्या भवति।

हेमशब्दो हिरण्यस्य पर्याय इति स्वीकारः तथा चामरः—हिरण्यं हेमहाटकमिति। चरके विमानस्थाने तु भेदेनैतयोरुपादानम्। तत्र माल्यदामदीपहिरण्यहेमरजतादि समासोक्त्या पठितम्, व्याख्यातं च चक्रेण हिरण्यशब्देनाघटितं हेम गृह्यते, हेमशब्देन च घटितमिति। तथा सत्यप्यमरे प्रयोगसाङ्कर्यं दृश्यते यदाह—हेमरूप्ये कृताकृते इति। मन्ये वृत्तानुरोधादेवं प्रायुङ्क्त कोषकारः।

कुम्भघटयोरपि न प्रायेण सुग्रहो विशेषः। अस्ति च स इति तं दिदर्शयिषामः। चरके सूत्रस्थाने इदानीं तावत्संभारान् विविधानपि समासेनोपदेक्ष्याम इत्युपक्रम्य तांस्तानर्थान्परिगणयन् कुम्भघटौ साहचर्येण पठत्या चार्यः। तत्राह टीकाकारश्चक्रपाणिः—कुम्भो दृढावयवोऽल्पमुखो घट इति।

अनर्थकापार्थकयोरपि समानार्थकाभिमतयोर्विशेषं सुधियः स्वदन्ताम्। चरके विमानस्थाने वाक्यदोषान्परिगणयति ग्रन्थकारः। तत्रानर्थकमपार्थकं चेति दोषद्वयमपि कीर्तयति। स्वयमेव च व्याख्याति। तद्यथा। अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्नार्थतो गृह्यते। अपार्थकं नाम यदर्थवच्च परस्परेण चायुज्यमानार्थकम्। यथा चक्रनक्रवंशवज्रनिशाकरा इति।

इदं चाकूतकरं भविष्यति विदुषां धृतिधैर्ययोरप्यर्थभेदः समस्तीति। भारते शान्तिपर्वणि चरके च तयोर्भेदेनोपादानं दृश्यते। भारते तावत्—तेजो धैर्यं क्षमा

दृष्टेः। तद्यथा। तर्जापयति मां नित्यं भर्त्सापयति चासकृत् ( ६।३३।९ ) इति। तत्रैवं विविङ्क्ते तिलककारः–अवाचिकी भीषिका तर्जनम्। वाचिकी तु सा भर्त्सनमिति। इदं च हृदयङ्गमम्। तथा हि भष भर्त्सन इति पठ्यते न तु भष तर्जन इति। आगन्तुमुपसर्पन्तं निशाम्य वाचा भीषयते श्वा न तु कायव्यापारेण। प्रदेशिनी नामाङ्गुलिस्तर्जनीति संज्ञान्तरेणोच्यते न तु भर्त्सनीति विभीषिकायां वाग्व्यवहाराभावात्। अत एवामरः शब्दवित्तमः पपाठ–भर्त्सनं त्वपकारगीरिति।

केयूरमङ्गदं तुल्ये इत्यमरे पर्यायवचनतया पठिते। परं रामायणे भारते चानयोः सहप्रयोगदर्शनान्नैते समानार्थके इति शक्यमध्यवसातुम्। रामायणे तावत्––अङ्गदानि च चित्राणि केयूराणि शुभानि चेति दृश्यते। तत्राङ्गदं बाहुमूलधार्यं भूषणम्। केयूरं तदधोभागस्थमिति तिलककारः। भारत उद्योगपर्वणि चाप्येनयोर्भेदेनोपादानं विलोक्यते। तद्यथा। अङ्गदैः पारिहार्यैश्च केयूरैश्च विभूषितान् ( १६२।१६ ) इति। तत्रैव भीष्मपर्वण्यङ्गदकेयूरयोः साहचर्येण पाठस्तयोः पर्यायतां व्याहन्ति––काञ्चनाङ्गदकेयूरैः कार्मुकैश्च महारथाः ( १७।१७ ) इति।

विलापः परिदेवनमिति परस्परेण समानार्थकं द्वयं कोषेषु। अत्रापि विशेषः कश्चिदस्ति स वक्तव्यः। परिदेवनमिति चौरादिकाद् दिव परिकूजन इति धातोर्व्युत्पद्यते कूजनं रोदनं चास्यार्थः। कूजति रोदितीत्यनर्थान्तरम्। अङ्गाप्रातिलोम्ये ( ८।१।३३ ) इति सूत्रे अङ्ग कूज वृषल, इदानीं ज्ञास्यसि जाल्मेति प्रत्युदाहरणे तदर्थावगतेः। विलाप इति तु लप व्यक्तायां वाचीत्यस्मात्तेनैतयोरर्थभेदः स्फुटः। तथा चैतयोः पृथगर्थतया रामायणे प्रयोगः—विलपितपरिदेवनाकुलं व्यसनगतं तदभूत्सुदुःखितम् (२।३९।४१)। तत्र विलपितं रामगुणकैकेयीदुर्गुणप्रतिपादकं वाक्यम्। परिदेवनं रोदनमिति रामकृता विवृतिः।

पिशुनसूचकौ समार्थकौ प्रतिपद्येते। तथा च धातुपाठः सूच पैशून्य इति। भृगुप्रोक्तायां मनु संहितायां तु भिन्नार्थकतया प्रयुक्तौ। पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् ( ११।५० ) इति। तत्र पिशुनो विद्यमानदोषाभिधायी। सूचकोऽविद्यमानदोषाभिधायक इति कुल्लूको विशेषमाविष्करोति।

सिकताशर्करावालुकानां प्रायेण व्यतिकीर्यन्ते प्रयोगाः। अस्तीह सामान्यं भेदश्च। भारते शान्तिपर्वणि भूमिपाषाणसिकताशर्करावालुकाभस्मशायिन इति प्रयोगो लक्ष्यते। तत्र सिकताः सूक्ष्मपाषाणपांसवः। शर्करा कर्करसहिता मृत्। वालुका लघूपलमिश्राः सिकता एवेति भारतभावप्रदीपे नीलकण्ठः।

सुत्प्रीतिः प्रमदो हर्ष इति हर्षनामस्वमरः । मुत्प्रमोदयोस्तु प्रत्ययो भिद्यते न प्रकृतिः । तेनानवकाशोऽर्थभेदः । प्रमोदामोदयोश्चाप्युपसर्गौ भिद्यते केवलं न प्रकृतिर्न वा प्रत्ययः । तस्मात्तयोरप्यर्थवैशिष्ट्यं न । इदानीं विचार्यते प्रीतिहर्ष-प्रमोदानां परस्परं को विशेष इति । इदानीं तावदभ्युपेयं प्रीतिर्नाम सामान्यस्तोष इति । अस्ति खलु मोदहर्षयोर्भेद इति श्रीरामायणे 'न चाहृष्यन्न चामोदन् वणिजो न प्रसारयन्' ( २।४८।४ ) इत्यत्र स्पष्टम् । तत्र हर्षः शारीरो मुखविका-सादिरूपः । मोद आन्तरो हर्ष इत्येवं विविनक्ति रामायणतिलके रामः । परं नायं वि... भावान्प्रकृत्याह-

पर्यायवचनविवेके

यस्य देवा देवताः संबभूवुः —

अथर्ववे० १।४।४ ॥

तद्धितेषु

स्वी देवाः ।

देवात्तल् इत्यत्र देयम्

...यमः । चरके सूत्र... ...म

इत्युपक्रम्य तांस्तानर्थान्परिगणयन् कुम्भघटौ साहचर्येण पठत्या चाय... । तत्राह टीकाकारश्चक्रपाणिः—कुम्भो दृढावयवोऽल्पमुखो घट इति ।

अनर्थकापार्थकयोरपि समानार्थकाभिमतयोर्विशेषं सुधियः स्वदन्ताम् । चरके विमानस्थाने वाक्यदोषान्परिगणयति ग्रन्थकारः । तत्रानर्थकमपार्थकं चेति दोषद्वयमपि कीर्तयति । स्वयमेव च व्याख्याति । तद्यथा । अनर्थकं नाम यद्व-चनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्नार्थतो गृह्यते । अपार्थकं नाम यदर्थवच्च परस्परेण चायुज्यमानार्थकम् । यथा चक्रनक्रवंशवज्रनिशाकरा इति ।

इदं चाकूतकरं भविष्यति विदुषां धृतिधैर्ययोरप्यर्थभेदः समस्तीति । भारते शान्तिपर्वणि चरके च तयोर्भेदेनोपादानं दृश्यते । भारते तावत्—तेजो धैर्यं क्षमा

शौचमनुरागः स्थितिर्धृतिः । परीक्ष्य च गुणान्नित्यमिति (८३।२१) स्मर्यते । तत्र धैर्यं महत्यामप्यापदि चित्तस्यानवसादः । धृतिर्धारणसामर्थ्यमिति विशेषमुन्मेषयति नीलकण्ठः । साध्विदं विवेचनमिति भाति । धीरस्य धृतिमतः कर्म धैर्यं भवति । धृतिस्तु वृत्तिविशेषः, तेन धृतिधैर्ययोर्जन्यजनकभावः सूपपन्नो भवति । धृतिः कारणं धैर्यं कार्यमिति । इदं चान्यत्र शान्तिपर्वणि (१६२।१९) धृतिर्नाम सुखे दुःखे यया नाप्नोति विक्रियामिति वचनेन भूयः पोषमेति । चरके विमानस्थानेऽनुमेयार्थाननुक्रामन्नाह—धैर्यमविषादेन, धृतिमलौल्येन ... विद्यादिति । तत्र धैर्यं विपद्यपि मनसोऽदैन्यमिति चक्रपाणिः । अत्र धैर्यं नाम विषादप्रतिरोधी गुणः, धृतिश्च चापलप्रतियोगिनीति विशेषो विवक्षितो भाति ।

दरी तु कन्दरो वा स्त्रीत्यमरोऽपठीत् । अत्राप्यर्थविशेषोऽस्ति रामायणे संनियोगेन प्रयोगदर्शनात् । तद्यथा । विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव । सरित्प्रस्रवणप्रस्थान् दरीकन्दरनिर्झरान् ॥ इति । तत्र दरी पाषाणनिर्भेदः । कन्दरा गिरिगुहेति विशेषमुत्पश्यति तिलककारः । इमं च विशेषं कवयो नाद्रियन्त इत्यन्यदेतत् । तथा च वैराग्यशतके भर्तृहरिः कन्दरवचनं दरीशब्दं प्रयुङ्क्ते—एका नारी सुन्दरी वा दरी वेति ।

अश्रुबाष्पयोरिति पर्याययोरपि सुस्थितो विभेदः । कण्ठः स्तम्भितबाष्पवृत्तिकलुष इत्यत्र शाकुन्तलेऽश्रुणः पूर्वावस्था बाष्पमिति राघवभट्टः । नेदमुत्प्रेक्षामात्रम् । रामायणेऽश्रुबाष्पयोः सहप्रयोगोपलम्भात् । तद्यथा । अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः इति (२।४८।३) । अन्यत्रापि रामायणे (२।९९।२) बाष्पकृतः कण्ठरोध उदीरितः । तद्यथा । बाष्पैः पिहितकण्ठैश्च प्रेक्ष्य रामं यशस्विनमिति । तेनाश्रुप्रवाहोऽश्रुपातो वा भवति न जातु बाष्पप्रवाहो बाष्पपातो वेति । मेघदूते (१।१२) तु स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णमिति बाष्पाश्रुणोरभेदेन प्रयोगश्चिन्त्यः ।

विषगरौ समानार्थौ प्रतिपन्नौ । तथा चामरः—क्ष्वेडस्तु गरलं विषमिति पठति । गरगरलयोस्तु न विशेषः कश्चिदस्ति श्यामश्यामलवत् । अन्यत्र लिङ्गभेदात् । इदं तु विमृश्यं विषगरयोः सोऽस्त्युत नेति । अस्तीति ब्रूमः । तयोः साहचर्येण प्रयोगदर्शनात् । चरके सूत्रस्थाने तस्यायुर्वेदस्याङ्गान्यष्टौ । तद्यथा । कायचिकित्सा शालाक्यं शल्यापहर्तृकं विषगरवैरोधिकप्रशमनं भूतविद्या कौमारभृत्यकं रसायनानि वाजीकरणम् इति । तत्र गरः कालान्तरप्रकोपि विषम् इति चक्रपाणिर्व्याचष्टे । तत्रैव चान्यत्र जठरामगरार्दिता इति पाठं विवृण्वानः स एव गरः कृत्रिमं विषमित्याह ।

तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोरित्यमरे पर्यायवचनाः। भारते त्वेषां भेदेनोपादानम्। तथा चोद्योगपर्वणि (१५५।३) सानुकर्षाः सतूणीराः सवरूथाः सतोमराः सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सहर्ष्टय इति पाठः। तत्र नीलकण्ठ एवं भेदमभ्यूहति—तूणीरो रथवाह्यो बाणकोशः। महानिषङ्ग इति यावत्। उपासङ्गा हयगजवाह्यास्तूणाः। निषङ्गाः पत्तिवाह्याः त एवेति। विराट-पर्वणि (६०।२०-२१) तु स इत्थं प्रविवेकं तनुते—ततो निषङ्गे महातूणीरे पतिते सति उपासङ्गात् क्षुद्रतूणीरात्स्वदेहवाह्यादिति।

पुम्यानाक्रीड उद्यानमित्याक्रीडोद्याने समानार्थके अभ्युपेयेते। एते अपि विशिष्येते। सहप्रयोगदर्शनात्। तथा च रामायणे पाठः—देवाक्रीडशताकीर्णां देवोद्यानयुतां नदीम् (२।५०।१५) इति। तत्र देवानामाक्रीडैः क्रीडापर्वतैरिति तिलकम्।

अटव्यरण्यं विपिनं काननं गहनं वनमिति वननामस्वमरः। एषां गहनमिति दुष्प्रवेशार्थमभिधाय दुष्प्रवेशं वनमभिधातुं प्रावृतदिति पर्यायवचनं बभूवेत्यध-स्ताद् दर्शितम्। इतरेषामप्यदूरविप्रकर्षात् पर्यायत्वम्। सहप्रयोगो हि दृश्यते। तथा च श्रीरामायणे प्रयोगः—दुष्प्रतीकमरण्येऽस्मिन् किं तात वनमागत इति (२।१००। ५)। तत्रारण्यं गजाद्युपभोग्यम्। वनमाम्रादियुतं मनुष्यभोग्यमिति तिलककारो रामः। अन्यत्रापि रामायणे—शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकानना (२। ४८।१०) इत्यटवीकाननयोः सहप्रयोगः। तत्र रम्यकाननाश्चारुवृक्षसङ्घा इत्येवमर्थापयति रामः।

वल्ली तु व्रततिर्लतेत्यनर्थान्तरमिति कोषकृतः। परं वल्लीलतयोः सहप्रयोग-दर्शनान्नेमे पर्यायाविति गम्यते। तथा च भारते भीष्मपर्वणि प्रयोगः—वृक्षगुल्म-लतावल्ल्य इति तत्र लता वृक्षाद्यारूढा गुडूच्यादयः। वल्ल्यो भूमिप्रसारा वर्षमात्रस्थायिन्य इति विशेषमभिव्यनक्ति नीलकण्ठः। वल्लीवीरुधोस्तु व्यक्ततरो भेदः। एतयोरपि रामायणे (४।४८।०१) सहप्रयोगः। तद्यथा। न चात्र वृक्षा-नौषध्यो न वल्ल्यो नापि वीरुध इति। तत्र वल्ल्यो वृक्षाद्याश्रिताः। वीरुधो भूम्याधारा इति तिलके रामः। तदिदं नीलकण्ठीयेन व्याख्यानेन विरुध्यते।

तीक्ष्णनिशितौ पर्यायवचनाविति प्रतीतौ। तावपि भिन्नार्थकाविति शक्यं प्रतिपत्तुम्। तथा हि भारते भीष्मपर्वणि भेदेनैतयोरुपादानम्—सायकेन सुपीतेन तीक्ष्णेन निशितेन च (४५।४८) इति। तत्र तीक्ष्णेन सूक्ष्मधारेण, निशितेन शाणोल्लीढेनेति नीलकण्ठः।

स्थपतिः कारुभेदेऽपीत्यमरे मूल एव स्थपतिः कारुविशेष इत्युक्तम्। विवृतं च स्वामिना कारुविशेषो मुख्यतक्षेति। तेन स्थपतिर्वर्धकिमात्रं न भवति। तथा

च श्रीरामायणे 'कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः। तथा वर्धकयश्चैवेति' भेदेनोपदानं विशेषमिममुपस्तभ्नाति। स्थपतयो रथादिकर्तारः प्रधानवर्धकयः, वर्धकयस्तक्षाण इति च तत्र तिलकम्।

स्यान्माया शाम्बरीत्यमरं व्याचक्षाणः स्वामी 'इन्द्रजालं तु कुसृतिः कुहकं कुहिका चेति' कोषान्तरमुदाहरति पर्यायान्तरसमुच्चिचीषया। मायाकारस्तु प्रातिहारिक इत्यत्र च मूले प्रातिहारिक ऐन्द्रजालिक इत्याह। भिद्यन्ते च मायादयो मिथ इति च विवक्षामः। तत्रैषां वाक्ये भेदेनोपादानमेव प्रमाणम्। तथा च भारत उद्योगपर्वणि प्रयोगः—न माया हीन्द्रजालं वा कुहिका वापि भीषणेति (१६०।११८)। तत्रार्जुनमिश्रष्टीकाकारो मायाऽनृतदर्शिनी कापि विद्या विश्वरूपादिदर्शनरूपा। इन्द्रजालं मन्त्रौषधादिभिश्चक्षुरादिप्रतिबन्धेनान्यथा प्रतिभानम्। कुहिका हस्तलाघवेनान्यथा दर्शनमिति ग्रन्थेन मायादीनामन्योन्यं भेदं ब्रवीति।

न्यासनिक्षेपयोः को विशेष इत्यपि जिज्ञासास्पदम्। वात्स्यायनीये कामसूत्रे न्यासनिक्षेपयोर्वाक्ये सहप्रयोग एवार्थविशेषे मानम्। तथा च तत्र पाठः— प्रसृते च परिचये तस्या हस्ते न्यासं निक्षेपं च निदध्यादिति। न्यासाः स्थाप्याश्चिरकालग्राह्याः। निक्षेपोऽल्पकालग्राह्य इति च तत्र जगद्धरष्टीकाकारः।

सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समा इत्यमर एवां समानार्थत्वमातिष्ठते। तत्र नहि सर्वे बन्धवः सगोत्रा भवन्ति। सप्तमे पुरुषे सपिण्डताविनिवृत्तौ सगोत्रता संवर्तते। बन्धुबान्धवयोस्तु नार्थभेदः कश्चित्, रूपभेद एव केवलः स्वार्थिकप्रत्ययकृतः। सम्बन्धिशब्दोपि बन्धुपर्यायो भवतीति व्यामुह्यति जनः। भिद्यन्ते च ज्ञातिसम्बन्धिबान्धवा इत्यत्र मनुसंहिता प्रमाणम्। एतं हि तत्र स्मर्यते—बालवृद्धातुरै वैंद्यज्ञातिसम्बन्धिबान्धवैः (४।१७९)। तत्र ज्ञातयः पितृपक्षाः। सम्बन्धिनो जामातृश्यालकादयः। बान्धवा मातृपक्षा इति कुल्लूकः। भारतेपि शान्तिपर्वणि (१३८।३०) 'ये च सम्बन्धिबान्धवा इति सम्बन्धिबान्धवयोर्भेदेन ग्रहः।

इदमिह विमृश्यमानं स्वदिष्यते विमर्शकेभ्यः पूगश्रेणिव्रातानां परस्परं किमन्तरमिति। पूगाञ्ञ्योऽग्रामणीपूर्वादिति (५।३।११२) सूत्रे नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगा इति काशिका। व्रातच्फञोरस्त्रियाम् (५।३।११३) इति सूत्रे च नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घा व्राता इति सैव। श्रेण्यादयः कृतादिभिः (२।१।५९) इति सूत्रे भाष्यप्रदीपे एकशिल्पपण्याश्रयणेन जीविनां सङ्घः श्रेणिरिति कैयटः। एतदेव कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिरित्यमरवचनमनुरुन्धे। राज्याङ्गानि प्रकृतयः

पौराणां श्रेणय इत्यत्र चामरं एकमुख्यः सजातीयसमूहः श्रेणिरिति स्वामिकृत-मुद्घाटनम् ।

प्रायेणालिङ्गनपरिष्वङ्गावेकार्थौ प्रतिपद्येते । तदप्यदूरविप्रकर्षान्न त्वत्यन्ताभेदादिति श्रीरामायणे सस्वजे गाढमालिङ्ग्य (६।१०१।४६) इति वचनं प्रमाणम् । मन्ये बाहुभ्यां कृतस्यावेष्टनस्यालिङ्गनमिति नाम । वक्षसोपपीडनस्य च परिष्वङ्ग इति । परिरम्भ आश्लेष उपगूहनमित्येतेऽपि परिष्वङ्गेण समाः ।

इदमिह विचार्यतेऽशनभोजनभक्षणखादनानि समानार्थानि भवन्त्याहोस्विन्नानार्थानीति । तत्राशनभोजने अभिन्नार्थे इत्यभ्युपगमः, अभ्यवहरणसामान्यं च ब्रूतः । यत्राभ्यवहार्यं विशिष्य नोच्यते तत्राश्नातिः प्रयुज्यते भुजिर्वा । यथाऽऽशितः कृताहारस्तृप्त इत्युच्यते । यथा वाऽनीतपिबता वर्तत इत्यत्र । भुक्ता ब्राह्मणा इत्यत्र च । दुर्गस्त्वाह—लोकेपि हि नातिकठिने नातिद्रवेऽश्नातिशब्दः प्रसिद्धः । अश्नाति पायसमिति । (नि० ४।१९।६)। भक्षणखादने तु खरविशदस्यार्थस्याभ्यवहरणे वर्तेते ।

खाद भक्षण इति साधुरर्थनिर्देशः । तथा च नीतिकारवचनम्—न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छतीति । समुच्चये सामान्यवचनस्येति सूत्रे (३।४।५) ओदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खादेत्येवायमभ्यवहरतीति काशिकोदाहरणेपि भुजिखाद्योरौपचारिकः प्रयोगः । भक्षिभुजी अप्यत्यन्तमेकार्थौ न । भक्ष्यतां भुज्यतां नित्यं दीयतां रम्यतामिति । गीयतां पीयतां चेति शब्दश्चासीद् गृहे गृहे (भा० आदि० २०९।३१ ) ।। अत्र पद्ये भक्षिभुज्योः साहचर्यमैवैकार्थ्यं वारयति । पाणिनीयाष्टके संस्कृतं भक्षाः (४।२।१६), हितं भक्षाः (४।४।६५) इत्यत्र च भ्राष्ट्रे संस्कृता भ्राष्ट्रा अपूपाः, अपूपभक्षणं हितमस्मा इत्यापूपिक इत्युदाहृत्योरपि यत्र दन्तव्यापारपूर्वकं निगरणं तत्र भक्षणव्यवहार इति विशदम् । खरविशदमभ्यवहार्यं भक्ष्यमिति च काशिका । जिह्वाव्यापारमात्रेण यद्ग्राह्यं पायसादि तद्भोज्यम् । परं भक्षणमन्यत्राप्यतिदिश्यत इति नानुपेक्ष्यम् । भोज्यं भक्ष्ये (७।३।६९) इति पाणिनीयं शासनम् । इह भक्ष्यमभ्यवहार्यमात्रमिति काशिका । अब्भक्षो वायुभक्ष इति भाष्यप्रयोगेपि भक्षयतिरभ्यवहरतिना समानार्थः । खादतिस्तु नाऽशने सामान्ये क्वचिदिष्यते, शब्दस्वाभाव्यादिति विबुधा विभावयन्तु । अतएव संगच्छते चरके सूत्रस्थाने (२८।३) ऽशितपीतलीढखादितप्रभवास्चास्मिञ्शरीरे व्याधयो भवन्तीत्यशितखादितयोः पृथङ्निर्देशः ।

गिरिपर्वतौ पर्यायवचनाविति कोषकारः । अथर्वसंहितायां (६।१७।३) त्वेतयोः साहचर्येण प्रयोगः—यथेयं पृथिवी मही दाधार पर्वतान् गिरीन् इति । अवश्यं तद्याभ्यां विविक्तार्थाभ्यां भाव्यम् । विविनक्ति चेत्थमाचार्यः सायणः—पर्वता महाशैलाः । गिरयस्तत्पर्यन्तवर्तिन इति ।

भुजबाहू प्रवेष्टो दोरित्यमरपाठे दोर्बाहू पर्यायौ। परमिमावपि सान्तरौ, शौनकीया ह्येनौ समभिव्याहारेणाधीयते तद्यथा—मित्रश्च वरुणश्चांसौ त्वष्टा चार्यमा च दोषणी महादेवो बाहू इति। अंससंसक्तदेशो दोः, ततः परो बाहुरिति तद्व्याख्यातारः।

देवखातबिले गुहा गह्वरमित्यमरः पठति। परं नैते गुहागह्वरे एकार्थे भवतः। गुहा गिरीणां गिरिगह्वराणीति साहचर्येण भारते (वन० १७७।५) पाठदर्शनात्। गुहाऽल्पप्रमाणा दरी। गह्वरं महती दरीत्येवं नीलकण्ठः पर्यायतां व्यपोहति।

रत्नं मणिर्द्वयोरित्यत्र मणिरत्नयोः समानाभिधेयतामभीच्छत्यमरः। परं नैते समानाभिधेये भवतः। अस्त्यत्र विशेषः। मणिकाञ्चनरत्नानीत्यत्र भारते (आदि० १।१३२) सम्पाठात्। मणयो विषरोगादिहरा दिव्योपलाः। रत्नानि वज्रवैदूर्यादीनीति नीलकण्ठकृतो विवेकः।

हेतुकारणे पर्यायाविति प्रायोवादः। परमेतयोरपि नात्यन्ताय पर्यायता। हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न स इत्यत्र भारते (आदि० ३७।१५) युगपत् प्रयोगदर्शनात्। हेतुभिर्विप्रशापामोघत्वादिभिः। कारणैस्तन्मूलैर्विप्रावज्ञादिभिरिति तत्र नीलकण्ठीयं विवरणम्।

क्षत्तृ सङ्ग्रहीत्रोः पर्यायत्वं प्रसिध्यति, तदपि न सत्प्रतिष्ठम्। नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नम इत्यत्र (१६।२६) वाजसनेयके युगपत्प्रयोगदर्शनात्। क्षत्तारो रथाधिष्ठातारो रथस्वामिनः। सङ्ग्रहीतारः सारथय इति विवेक उवटे।

प्रायेण स्तेनतस्करौ पर्यायवचनावभ्युपेयेते। न चेदं साम्प्रतम्। वाजसनेयके (११।७७) ये स्तेना ये च तस्करा इत्यत्रोभयोः सह प्रयोगदृष्टेः। स्तेना गुप्तचौराः। तस्कराः प्रकटचौरा इत्येवमेतौ महीधरो भिनत्ति।

सायणस्तु अप स्तेनं वासो गोअजमुत तस्करम् (१९।५०।५) इत्यथर्वश्रुतिव्याख्यायामाह—स्तेनतस्करयोः पर्यायत्वे व्यवहार्यद्रव्यगौरवेण पृथगपहननमुक्तम् इति।

तनुत्रं वर्म दंशनम्। उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् इत्यमरे वर्मकवचयोः पर्यायवचनत्वं प्रव्यक्तम्। वाजसनेयके (१६।२५) नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने चेत्यत्र सहप्रयोगात्तद् विघटते। पटस्यूतं कर्पासगर्भं देहरक्षकं कवचम्। वर्म लौहम् इति हि तद्विघटनपरं भाष्यम्।

जवनाशुगयोरैकार्थ्यं प्रायात्प्रत्येति लोकः। सोऽस्य भ्रमः। भारते (सभा० २७।२८) जवनानाशुगांश्चैव करार्थं समुपानयद् इत्यत्रोभयोः सम्पाठदर्शनात्। इत्थं चानयोर्भेदं विवृणोति टीकाकृन्नीलकण्ठः—जवनान् धावने शीघ्रान्। आशुगान् यदृच्छया चलनसमर्थान्।

प्रीतिप्रणयौ समानाभिधेयाविति प्रतिपद्यते लोकः। परं नैतदस्ति। श्रीरामायण इत्यनयोः सहप्रयोगदर्शनात् — प्रणयप्रीतिसंयुक्तम् (४।२८।८)। एवं द्वैतं भूषणकारो विविनक्ति — प्रणयः स्नेहविशेषः स्नेहः। प्रीतिर्भूतविषया इति।



रक्षतिर्गोपायतिना समानार्थ इति प्रत्ययितो लोकः, परं नैषा वस्तुस्थितिः। स मा रक्षतु स मा गोपायतु इत्यथर्वसंहितायां शौनकीयायामुभयोः सहप्रयोगोपलम्भात्। अत्र सायण इत्थं भाषते—अत्र रक्षणगोपनयोरहितनिवारणहितकरणरूपपालनभेदेन भेदो द्रष्टव्यः।

ओजोऽसि ओजो मयि धेहि। वीर्यमसि वीर्यं मयि धेहि। सहोऽसि सहो मयि धेहि इति यजुष्कण्डिकायां (२८।५) ओज आदीनां बलवाचकत्वेप्यस्त्यवान्तरभेदः। ओज इन्द्रियबलं भवति। वीर्यं शारीरम्। सहो मानसम् इति व्याख्याति महीधरः। ओजो दीप्तिर्बलं वीर्यं प्रसह्यकरणं सह इति तु षड्गुरुशिष्यः।

अवनत्राणयोः समानेपि पालनेर्थेऽस्ति कश्चिदवान्तरो भेदः। त्रातारमिन्द्रमवितारमिन्द्रमित्यत्राथर्वणे द्वयोर्युगपच्छ्रवणात्। अयमसौ सायणोद्भावितो भेदः—त्राणं नाम उपस्थितेभ्यो भयहेतुभ्यो रक्षणम्। अवनं तूदेष्यतां निरोधः।

स्तेनस्तायवोरपि पर्यायत्वेनाभिमतयोर्निर्दक्तव्यो भेदः। (१६।२१) यजुष्कण्डिकां व्याचक्षाणो महीधर आह—गुप्तचौरा द्विविधा भवन्ति—रात्रौ गृहे खातादिना द्रव्यहर्तारः, स्वीया एव वाहर्निशमज्ञाता हर्तारश्च। पूर्वे स्तेना उत्तरे स्तायवः।

कुत्सा निन्दा च गर्हणे इत्यमरे कुत्सागर्हयोः पर्यायवचनताऽभ्युपेयते। भारते वनपर्वणि (२०७।२३) न कुत्सयाम्यहं किं चिन्न गर्हे बलवत्तरम् इत्यत्र कुत्सागर्हयोः साकमुदीरणात्सा विघटते। कुत्सागर्हे इत्थं विविनक्ति नीलकण्ठटीकाकारः—कुत्सा विद्यमानदोषसंकीर्तनम्। गर्हाऽविद्यमानदोषारोप इति। सेयमसदुत्प्रेक्षा। वस्तुतः कुत्साऽवक्षेपणं परस्य न्यक्करणं लघूकरणं भवति। कुत्स्यमानः सदोषः स्याददोषो वेत्यनादरः। अवक्षेपणे कन् (५।३।९५) इत्यत्र 'व्याकरणकेन नाम त्वं गर्वितः' इत्युदाहरणम्। अजेर्व्यघञपोः (२।४।५६) इति सूत्रे भाष्ये वैयाकरणसूतयोरेष संवादः स्थितः—एवं हि कश्चिद् वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति। सूत आह—आयुष्मन्नहं प्राजितेति। वैयाकरण आह—अपशब्द इति। सूत आह—प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञः। इष्यत एतद्रूपमिति। वैयाकरण आह—अहो नु खल्वनेन दुरुतेन बाध्यामहे इति। सूत आह—न खलु वेञः सूतः सुवतेरेव सूतः। कुत्सा प्रयोक्तव्या। दुःसूतेनेति वक्तव्यम्। नात्र कुत्सा विद्यमानदोषविषया, सूतस्य निर्दुष्टत्वात्। लघूकरणं तुच्छत्वापादनमेवाभिप्रेयते। गर्हा नामासद्दोषविषया भवतीत्यपि न। गर्हायां लडपिजात्वोः (३।३।१४२) इत्यत्र गर्हायां गम्यमानायां सर्वलकारापवादो लट् विधीयते। उदाहरति च काशिकाकारः—अपि तत्रभवान् वृषलं

कुलं वंशश्च नात्यन्तमभिन्नार्थौ। भारते (उ० १३३।२६) इत्यनयोः सहप्रयोगः समीक्ष्यते ... कुलं ज्ञातयः। वंशः सोमसूर्यादि मूलो... नील०।

याजयति, जातु तत्रभवान् वृषलं याजयति, गर्हामहे। अहो अन्याय्यमेतत्। अत्र दोषवतो याजकस्य गर्हा न त्वदोषस्य।

कृपानुकम्पादयः पर्याया इत्याभिधानिकाः। तथा चामरे पाठः—कारुण्यं करुणा घृणा। कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपि इति। भारते त्वेषां समानवाक्ये सम्पाठात्पर्यायत्वमदूरविप्रकर्षादित्यनावृतं गम्यते। अयं हि भारते स्थितः पाठः— कृपाऽनुकम्पा कारुण्यमानृशंस्यं च भारत।···कुरुषे तद् विशिष्यते (उद्योग० ९५।६)॥ कृपादीनित्थं व्यविचन्नीलकण्ठः—कृपा परस्य सुखार्थे यत्नः। अनुकम्पा परदुःखदर्शने त्रासः। कारुण्यं परदुःखप्रहाणार्थो यत्नः। आनृशंस्यं परदुःखाप्रदानम् इति।

कुलवंशयोः प्रायेण पर्यायवचनतां प्रतियन्ति लोकाः। स एष विभ्रमः। भारते अवल्गुकारिणं सत्सु कुलवंशस्य नाशनम् (उद्योग० १३३।२९) इत्यत्र युगपत्प्रयोगदर्शनात्। तत्रायं नीलकण्ठकृतः प्रविवेकः—कुलं ज्ञातयः। वंशः सोमसूर्यादि मूलोत्पत्तिस्थानम्।

चिन्ताशोकौ पृथगर्थौ। पार्थगर्थ्ये चिन्ताशोकपरायण इति भारते (द्रोण० ११९) प्रयोग एव मानम्। इत्थं चेमौ विविनक्ति भारतभावदीपे नीलकण्ठः— चिन्ता ध्येयविषये मनोवृत्तिप्रवाहः। शोक इष्टस्य पुनः पुनर्मनसि निवेशनमिति।

रुधिरशोणिते कोषेषु पर्यायौ पठितौ। इदमप्यदूरविप्रकर्षान्न त्वैकान्त्येनैकार्थ्यात्। रुधिरौघवतीं कृत्वा नदीं शोणितकर्दमाम् इति भारते (द्रोण० १४१।२९) पठ्यते। अत्र रुधिरमोघ इत्युक्तम्, शोणितं च कर्दमः। ततोऽनुमिन्मो घनं (संशीनं) रक्तं शोणितं भवति, तरलं च रुधिरमिति।

सत्त्वौजोबलवीर्याणि पर्यायाः पठिताः कोषेषु, न त्वेषां पर्यायत्वं व्यवतिष्ठते। तमप्रतिमसत्त्वौजोबलवीर्यसमन्वितम् इत्यत्र भारते (द्रोण० १।१) एषां सम्पाठात्। तत्रायं विवेको नीलकण्ठकृतः—सत्त्वं धैर्यं महत्यपि दुःखकारणे वैक्लव्यराहित्यम्। ओजो मानसं बलम्। बलं शारीरदार्ढ्यम्। वीर्यं समुत्साहादिहेतुः। क्वचित्समन्वितम् इत्यस्य स्थाने पराक्रमम् इति पाठः। तत्र पराभवसामर्थ्यमिति टीकाकारः। अन्यत्रापि द्रोणपर्वणि (४२।४२) अत्यद्भुतमहं मन्ये बलं शौर्यं च सैन्धवे। तस्य प्रब्रूहि मे वीर्यम्···॥ इत्याहृतम्। अत्र बलं सामर्थ्यम् (शारीरमिति विवक्षितम्)। शौर्यमुत्साहः। वीर्यं प्रभाव इत्येवमर्थापयते सः। अनुपदमुक्तेन वीर्यं समुत्साहादिहेतुरित्यनेन विरोधो न शङ्कनीयः। समुत्साहस्य प्रभावहेतुकत्वात्।

स्रजः प्र-ध: स्वानुलिखामचित्यत्रामरः लानुप्रत्यो पयर्विनो पठति, परं नैतावत्यन्तं मिन्नार्थको । श्रीरामायणे वाक्ये युगपत् प्रयोगात् — मैनाकस्य शिरोरत्नः स्रजं उत्कृष्टम्दरः (४।४३।३२)। वानरा उपलब्धाः



प्रत्या मध्यतरा इति टीकाकारः।

चारप्रणिधी प्रायेण पर्यायौ मतौ। भिद्येते त्विमावर्थतः। भारते (शां० ५८१५) चारश्च प्रणिधिश्चेति साहचर्येण पाठात्। तत्र चारो गुप्तस्पशः। प्रणिधिः स्पष्टः स्पश इति टीकाकारः।

प्रणिपाताभिवादने मिथो विशिष्येते इति प्रतिपन्नप्रायम्। भारते (शल्य० ६२।१६) कृताञ्जलिः सम्प्रणयं प्रणिपत्याभिवाद्य चेति पाठः। प्रणिपात उपसङ्ग्रहणं विधिवच्चरणग्रहणं भवति। अभिवादनं तु वाचा नमउक्तिः। अभिवादये देवदत्तोहं भो इत्यादिः।

हेतुकारणे अपि नात्यन्तं समानार्थके। हेतुकारणयुक्तैश्च वाक्यैः कालसमीरितैः (भा० शल्य० ६१।४२) इत्यत्रोभयोः साहचर्येण पाटोपलम्भात्। तत्र हेतवो दृष्टा अपराधाः। कारणान्यवश्यम्भावीनि इति विशेषः।

पर्यायाविति परिगृहीतौ मध्यस्थोदासीनावपि भिद्येते। उदासीनगणानां च मध्यस्थानां च भारतेत्यत्र (भारत आश्रम० ६।१) भेदस्य स्फुटमभिप्रेतत्वात्। तत्रोदासीनो नैकत्र पक्षपाती मतः। मध्यस्थश्च ततोऽन्यो द्वयोरपीष्टाकाङ्क्षी। अन्यत्र माध्यस्थ्यमौदासीन्यान्न व्यतिरिच्यते। तथा च कविकुलपतेः प्रयोगः—अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेप्यवलम्बतेऽर्थे (कु० सं० १।५२)।

प्रकृतं निबन्धं भाष्यकारकृतेन पर्यायार्थप्रविवेकेण पर्यवसाययामः। आशंसायां भूतवच्चेति सूत्रे (३।३।१३२) भाष्य आशंसासंभावनयोरविशेषादिष्टा व्यवस्था न प्रकल्पेतेति दोषमुद्भाव्याह भगवान्भाष्यकारः–न वा संभावनावयवत्वादाशंसायाः। संभावनावयवात्मिकाऽऽशंसा। आशंसा नाम प्रधारितोऽर्थोऽभिनीतश्चानभिनीतश्च। संभावनं नाम प्रधारितोऽर्थोऽभिनीत एवेति। अत्र कैयटः—आशंसासंभावनयोरिति। आशंसासंभावनयोरर्थभेदाभावादविशेष इत्यर्थः। आशंसानागतवस्तुवाञ्छा। संभावनमपि भाविवस्तूत्प्रेक्षणमिति भावः। न वेति। अवयवशब्दः पृथग्भाववाची। संभावनात्पृथगेवाशंसेत्यर्थः। प्रधारितोर्थ इति। इदं मे भूयादिति मनसा विषयीकृतोर्थः। अभिनीत इति। कारणयोग्यतावशाच्छक्यप्राप्तिरित्यर्थः। ततोन्योऽनभिनीत इति। अन्ये त्वप्रधारित इति पठन्ति। अनिर्धारितोऽवश्यंभावितयाऽनिश्चित इत्यर्थः। संभावनं चासति विधुरप्रत्ययोपनिपाते भवितव्यमनेनार्थेनेति ज्ञानमित्यनयोर्भेद इति।

इति पर्यायवचनविवेकोऽपवृक्तः।

माल्य वचने अपि स्रग्दामनी नात्यन्तमभिन्नार्थे। नित्यं दीपक्षौदक शस्त्र स्रग्दाम पुष्पलाजाभिलङ्कृते वेश्मनि (सुश्रुत० सूत्र० १९।२२) इत्यत्रोभयोः सम्पाठात्। भेदं चानयोरुद्भावयति डल्लनः— स्रक् मूर्धाला पुष्पमाला। दाम ग्रैवेयकादि।

मोहमूर्छे अपि समानार्थे ने। मूर्छा मांसक्षयो मोहः (सुश्रुत० सू० १५।२७) इति विवृण्वानो डल्लन आह— मूर्छा विज्ञानेन्द्रियनिरोधः। मोहो वैचित्त्यम्।

## करोतिना सर्वधात्वर्थानुवादः क्रियते

व्यवहारं किं जानीमो यदि करोतेः प्रयोगनानात्वं न विजानीमः। व्यवहारनिरूपणे नास्मिन्ग्रन्थे करोत्यर्थविचारो न न प्रसक्त इति तमवतारयामः।

अनेकार्था धातव इति वैयाकरणाः प्रतिपन्नाः। धातुपारायणेष्वर्थनिर्देशः प्रकारपरतया कृतो नार्थपरिगणनाय। तत्रैको मुख्योऽर्थो गौणान्यर्थान्तराणीति नावश्यं व्यवतिष्ठते। अवतेरेकोनविंशतावर्थेषु गुणप्रधानभावकल्पना शास्त्रपारीणेनापि विदुषा न शक्या समर्थयितुम्। अनिर्दिष्टेष्वर्थेषु प्रवृत्ता धातवः क्रियासामान्यादेव क्रियान्तरे वर्तन्त इत्यपि प्रायिकम्। क्वचित्प्रयोजनवशादुपचारः समाश्रीयते नाम। उपचर्यमाणा हि धातवः किमपि कामनीयकं भजन्ते। उन्मीलति चक्षुरिति मुख्यार्थे प्रयोगो न तथा स्वदते यथा 'उन्मीलन्ति वेदना' इति भाक्तः। सर्वथानेकार्थता[1] धातूनां नापलापमर्हति। वपतिर्बीजसन्ताने पठितः, लवनेऽपि वर्तते केशान्वपतीति। दिशतिरतिसर्जने पठित उच्चारणेऽपि वर्तते सन्दिशति वाचम् इति। शंसु स्तुताविति पठितः शंसतिर्हिंसायामपि दृश्यते नृन्शंसति हिनस्तीति नृशंस इति व्युत्पत्तेः। इयं चानेकार्थता नापरिच्छिन्ना। न हि सर्वो धातुरनेकार्थो न चैकः सर्वार्थः। कश्चिदेव निर्दिष्टार्थमतिरिच्य प्रवृत्तो दृष्टः। अल्पीयांसस्तर्ह्यनेकार्थतायाः प्रदेशाः। तदेतत्करोतिव्यतिरिक्तधातुविषयं न करोतिं क्रोडी करोति। करोतेस्तु वाचामगोचरो महिमा। सर्वे सर्वार्थवाचकाः (शब्दाः) इति यदाचार्याः संगृणते तत्करोतिविषये सुतरामवितथं प्रत्यक्षमुपलब्धेः। करोतिर्हि सर्वं धात्वन्तरवाच्यमर्थमभिधातुमीष्टे। तत्रेयमुपपत्तिः—

करोतिर्हि क्रियासामान्यवाची शक्तः क्रियाविशेषं धात्वन्तरवाच्यमभिधातुम्। यथा लिङ्गसर्वनाम नपुंसकम् एवं क्रियासर्वनाम करोतिः। भिन्नानि लिङ्गानि नपुंसकेनैकेन समाख्यायन्ते। यथा—'न तच्छास्त्रं न तच्छिल्पं न सा विद्या न सा कला। न तत्कर्म न योगो वा नाटके यन्न दृश्यते॥' इत्यत्र यच्छब्देन नपुंसकेनानपुंसकानामभिधानम्। देवदत्तः पठति, यज्ञदत्तः शृणोति, विष्णुमित्रो व्याख्याति तत्रागन्तुकः कश्चिदनुयुङ्क्ते किमिमे कुर्वन्तीति। अत्र करोतिना पठतिशृणोतिव्याख्यातीनामनुवादः क्रियते। इदं हि वस्तुस्वाभाव्यं यत् सामान्येन विशेषाभिधानं विशेषेण वा सामान्याभिधानम्। चरतिर्गमनसामान्ये पठितोऽर्जनपूर्वके गमनेऽपि वर्तते, भिक्षां चरतीति, अर्जयंश्चरतीत्यर्थः। वदतिर्व्यक्तायां

१. तत्र तनूकरणे तक्ष (३।१।७६) इति सूत्रं लिङ्गम्। वेः पादविहरणे (१।३।४१) इति च।

कुर्मुर्द्ध अथ। ५०७७म (मनु० ८।३८८)। मुख्यं भितोर- [illegible]

क्रमेण कृतो ग्रन्थान् कृत्वा (... ६।५१।८)। करोतिरिह प्रेरणे वर्तत इति निरुक्तटीकायां महेश्वरः।
प्रज्ञां कुर्वीत ब्राह्मणः (बृ० उ० ४।४।२१)। मनोनिवेशये-



वाचि पठितो भासनोपाधिकायामपि तस्यां दृश्यते वदते शास्त्रे वादीति। विपरीतोऽपि क्रमो लक्ष्यते—मत्रि गुप्तपरिभाषणे इति पठितः परिभाषणमात्रेऽपि वर्तते, किं मन्त्रयसे मित्र। शंसु स्तुताविति विशिष्टे कीर्तने पठितः शंसतिः कीर्तनमात्रेऽपि वर्तते—सुतजन्म शंसति नृपायेति यथा। वद व्यक्तायां वाचि इति पठितो वदतिरव्यक्तायामपि दृश्यते वदति वीणेति। शप आक्रोशे इति पठितः शपतिः करोत्यर्थेऽपि वर्तते यथा वसिष्ठश्चापि शपथं शेपे पैजवने नृपे (मनु० ८।११०) इत्यत्र। गती प्रयत्न इति विशेषे पठितो यतिः क्रियासामान्येऽपि वर्तते—तस्मिन्दिशमन्यां दिशि यतेत वा ... (...)।

करोतिना सामान्यार्थकेन यथा विशेषाभिधानं भवति तथा दिङ्मात्रमिह दर्शयामः। वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे। न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वेति भवभूतिपद्ये करोतिरभूतप्रादुर्भावे। अत्र करोतिरुत्पादयतिना समानार्थः। एवमेव भयं करोतीत्यत्र। आदिकर्मण्यपि वर्तते—चक्रे शोभयितुं पुरीमित्यत्र श्रीरामायणे (२।७।१०) यथा। काष्ठं भस्म करोति, स्वर्णं कुण्डलं करोति। अत्र कृञ् विकरणे वर्तते। कुरु पदानि खिनोरु शनैः शनैः (वेणी० २।२१) करिष्यसि पदं पुनराश्रमेऽस्मिन्, शनैः शनैः श्यामिकया कृतं पदम्। आकृतिविशेषेष्वादरः पदं करोतीत्यादिषु करोतिर्निक्षेपणार्थमाह। अश्मानमितः कुरु। करोतिरत्र स्थापने वर्तते। दशम्यामुत्थाय पिता नाम करोतीत्यत्र गृह्ये करोतिः प्रयोगे निर्देशे वा वर्तते। एवं ह्येष व्यवहार उपागतो रूढिं यदत्र लोको धात्वन्तरप्रयोगं न मृष्यति प्रायेण। ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदेति मनुवाक्ये करोतिरुच्चारणे वर्तते। मन्त्रादौ मन्त्रान्ते चोङ्कारमुच्चारयेदिति तदर्थः। पदं मिथ्या कारयते। अत्र मिथ्योपपदात्कृञोऽभ्यास (१।३।७१) इत्यात्मनेपदम्। असकृदुच्चारयतीति चार्थः। शब्ददर्दुरं करोतीत्यत्र पाणिनीयेऽनुशासने करोतिः प्रकृतिप्रत्ययादिविभागेन ज्ञाने वर्तते। शब्दं करोति प्रकृतिप्रत्ययादिविभागेन जानातीति शाब्दिकः। कलापिवैशम्पायनान्तेवासिभ्यश्चेति सूत्रव्याख्याने प्रत्यक्षकारिणो गृह्यन्ते न तु शिष्यशिष्या इति वृत्तिकारः। अत्र करोतिरध्ययने वर्तत इति पदमञ्जरी। ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महानिति (मनु० २।१५४)। अत्र करोतिर्व्यवस्थापने वर्तत इति मेधातिथिः। विचर्चिकातः कुरु, पादौ कुरु। अत्र करोती रोगापनयने उन्मर्दने च यथासंख्यं वर्तत इति भाष्ये स्पष्टम्। उदकं करोति पितृभ्य इत्यस्य पितृभ्यः सलिलं निवपतीत्यर्थः। तथा च गीतासु प्रयोगः—पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया इति। पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिरिति च मनौ (११।१८२)। कृतोदक उपयुक्तजल आचान्तः स्नातश्चोच्यते। अत्र करोतिरुपयोगे वर्तते।

कृञो द्वितीयतृतीयशम्बबीजात्कृषाविति सूत्रे (पा० ५।४।५८) करोतिः कर्षणे वर्तते। बीजाकरोति क्षेत्रम्। बीजावापेन सह कृषति क्षेत्रमित्यर्थः। तथा



... यामानि कुर्वन्ति पुनश्चन्द्रे (रा० २।६१।१८)। कुर्वन्ति विनियुञ्जते।
... जीर्णं च परिभुक्तं च यातयाममिदं द्वयमित्यमरः।

च मनुसंहितायां याज्ञवल्क्यस्मृतौ च प्रयोगाः—'अकृतं च कृतात्क्षेत्रात्' ( ८। ११४ ), फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत् (२।१५८) ॥ इति । पदकार इत्यत्र करोतिरवग्रहे वर्तते । पदान्यवगृह्णाति च्छिनत्तीति तद्व्युत्पत्तेः । स्तम्बशकृतोरिन् (३।२।२४) इत्यत्रानुवृत्तः कृञ् विसर्गे वर्तते । शकृत्करिर्वत्सः, शकृद्विसृजतीत्यर्थः । एवमेव मूत्रपुरीषे करोतीति मनुप्रयोगे । आज्ञां करोति, वचनं करोतीत्यादिषु कृञनुवृत्तौ वर्तते । दारान्कुर्वीत सिद्धये, कृतदारः, दारकर्म, दारक्रियेत्यादिषु करोतिः परिग्रहणे स्वकरणे वर्तते । शूलात्पाके (५।४।६५) इत्यनेन निष्पन्ने शूलाकरोति मांसमिति प्रयोगे करोतिः पचने वर्तते । तथा च कृताकृतास्तण्डुलाः ( याज्ञ० १।२८६ ), कृतान्नम् , अकृतान्नमितिप्रभृतयः प्रयोगाः प्रथन्ते । समयाच्च यापनायामिति (५।४।६०) डाचं शास्ति करोतिना योगे करोतिं च यापनया समानार्थमाचष्टे । समया करोति, कालं यापयतीति यावत् । प्राप्तमवसरमतिक्रमयन्नेवमुच्यते । समापनेपि वर्तते । तथा च श्रीरामायणे ( २।६४।५२ ) प्रयोगः—एवं त्वं पुत्रशोकेन राजन्कालं करिष्यसीति । मरिष्यसीत्यर्थः । भारतसंहितायामपि यापने प्रयोगः—चक्रुस्तेनाभ्यनुज्ञाता दश वर्षाणि पञ्च चेति । प्रतीक्षणेपि वर्तते—करोतु क्षणं मदर्थे, क्षणं कुर्वित्यत्र । सत्यादशपथे ( पा० ५।४।६६ ) इत्यत्र सत्यं करोति ब्राह्मण इति प्रत्युदाह्रियते । व्यक्तमत्र करोति शपत इत्यनर्थान्तरम् । क्वचित् करोतिरभिमर्शने वर्तते न च प्रशब्दं द्योतकमपेक्षते । तद्यथा—अभिषह्य तु यः कन्यां कुर्याद् दर्पेण मानव इति स्मृतिः ( मनु० ८।३६७ ) । मानितः कुरुतेऽस्त्राणि शक्रसद्मनि भारत इत्यत्र भारते ( वन० १६२।२२ ), चक्राराङ्गिरसां श्रेष्ठाद् धनुर्वेदं गुरोस्तदेत्यत्र ( शां० २।५ ), यां विद्यां कुरुते गुराविल्यत्रापस्तम्बे ( १।७।१२ ) च करोतिः शिक्षणे विद्योपादाने वर्तते । तन्मूलामतिमहतीं कथामकरोत् ( दशकु० पृ० १७३ ) इत्यत्र करोतिराख्याने वर्तते । सत्सङ्गतिः कथय किं न करोति पुंसाम् ( भर्तृ० २।२३ ) । करोति = साधयति । कण्ठे हारमकरोत् ( कादम्बरी ) । अकरोत् = अधात् , अधारयत् । अध्यक्षान् विविधान्कुर्यात्तत्र तत्र विपश्चितः ( मनु० ७।८१ ) । कुर्यात् = नियुञ्जीत । कुरु करे गुरुमेकमयोघनम् । यथा काष्ठानि करोति गोमयानि करोति इत्यादाने करोतिशब्दो भवति । एवमिहापि द्रष्टव्यम्—मी० शा० भाष्ये ४।२।६॥ सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ( याज्ञ० २।१८६ ) । राजकृतः = राजविहितः । कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ( ऋ० ७।१६।६ ) । कृधि = देहि । यत्र शुल्को न क्रियते अबलेन बलीयसे ( अथर्व० ३।२९।३ ) । अत्र करोतिर्दाने वर्तते । यां विद्यां कुरुते गुरौ ( १।७।१२ ) । अत्र करोतिरध्ययने वर्तते । बह्वीः समा अकरमन्तरस्मिन् ( ऋ० १०।१२४।४ ) इत्यत्र करोतिर्निवासे

३९२–इदं प्रधनं नगरम् इदं च निर्धनम् ।

३९३–ग्राम्यत्वादयो दोषा इमां दैवीं वाचं स्प्रष्टुमपि न समर्थयन्ते ।

३९४–धनकामुका भगवन्तं कमलिनं[1] न तथाऽऽराधयन्ति यथा कमलाम् ।

३९५–राजसूयं यियक्षुर्युधिष्ठिर इन्द्रप्रस्थे महतः संभारांश्चकार ।

३९६–जितकाशिनो[2] रामस्य लङ्कातोऽयोध्याप्रस्थाने ननन्दुर्वानरसैन्यानि ।

३९७–अम्ब इयमद्य भिक्षा प्राप्तेति बहिर्द्वारमर्जुनेनोक्ता कुन्ती समं विभज्य भुज्यतामिति सहसोक्तवती । ततः सा भिक्षा वधूर्द्रौपदीत्युपलभ्य महत्यसमञ्जसे[3] पतिता ।

३९८–बन्ध्यः स पुरुषो यस्य सुतो न जातः ।

---

३९२–प्रधनमिति युद्धनामसु पठितम् । तद्यथा—युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् इत्यमरे पाठः । तेन सधनं महाधनं धनीति वा वक्तव्यम् ।

३९३–समर्थयत इत्यस्य चिन्तयतीति वार्थः, उपोद्बलयतीति वा । न समर्थाः, न प्रभवः, न प्रभवन्तीति वा वाच्यम् ।

३९४–धनकामुका इत्यदुष्टम् । कमे र्भाषायामनिषेध इति षष्ठीसमासः । कमलेति लक्ष्म्या नाम । साऽस्यास्तीति कमली । व्रीह्यादित्वादिनिः । एवं व्युत्पत्तिसौष्ठवेऽपि कमलीति विष्णुं नाभिधत्ते, तेनेदं परिहार्यम् । कोषकारा अपि नेदं तत्रार्थे पठन्ति । वैयाकरणेन शब्दा व्युत्पाद्या नोत्पाद्याः ।

३९५–राजसूयेन यियक्षुर्युधिष्ठिर इत्येवं व्यवहरणीयम् । राजसूये यागे साधनभूतद्रव्यबुद्धिं विधाय तृतीयोपपाद्यते ।

३९६–अयोध्यां प्रति प्रस्थान इति वक्तव्यम् । अयोध्याप्रस्थानमिति तु दुर्घटः समासः ।

३९७–असमञ्जसे पतितेत्यस्य स्थानेऽनौचित्यसंकटे पतितेति वक्तव्यम् । समञ्जसमिति न्यायो भवति । अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् इत्यमरः । असमञ्जसं चान्यायः । सोऽर्थश्च नात्र घटत इति अनौचित्यसंकटे पतितेति वक्तव्यम् ।

३९८–बन्ध्योऽफलोऽवकेशी चेत्यमरे वनौषधिवर्गे पाठः । ऋतावपि फलरहितो वृक्षो बन्ध्य उच्यते । तत्साम्यादृतुमत्यपि या स्त्री न प्रजायते, निरपत्या भवति सा बन्ध्येति कीर्त्यते । पुरुषे तु नायमभिलापो दृश्यते । अनपत्य इत्येव तु युज्यते वक्तुम् ।

---

१. विष्णुमित्यर्थमभिप्रेति । २. जिताहवस्य । ३. अनौचित्यसंकटे इत्यर्थ इत्यभिमन्यते ।

३९९–इमानि दिवसानि मनो मे किमप्युच्चाटितमिवास्ति ।
४००–आदर्शविनीता इमे परिचारकाः ।
४०१–अनुबन्धं निपुणं निरीक्ष्य पादोत्थानं विधेयं सुधीभिः ।
४०२–अथ केन मूल्येनेमे ग्रन्थाः परिक्रीताः ?
४०३–विदेशे त्वेकस्मिन्नेव दिवसे केषाञ्चन वार्तापत्त्राणामनेकधा[1] प्रकाशनं भवति ।
४०४–मया गीर्वाणवाण्येव निजपाठ्या[2] स्वीकृता, अर्थलाभस्तु न मनसि कृतः ।
४०५–महतां प्रभावस्तु सद्य एव दृष्टिपथं गोचरयति[3], न तु चिराय निह्नुतस्तिष्ठति ।
४०६–शिक्षाशुल्कक्षमापणेनानुग्रहीष्यन्ति मामाचार्यचरणाः ।
४०७–अत्रावसरेऽध्यापका अपि भाषणानि ददुरध्यायका[4] अपि ।
४०८–यत्सनिर्बन्धं[5] समर्प्यमाणं वसुन्धराधिपत्यं रामेण पद्भ्यां निहतं सा परा सीमा धैर्यस्य ।

---

३९९–उदासीनमुद्विग्नं वेति वक्तव्यम् । चट स्फुट भेदने इति चुरादिषु पठ्यते । उच्चाटनं हिंसनं भवति ।

४००–विनयादर्शा इमे परिचारका इति व्यवहार्यम् । विनयस्यादर्शा इति वा विनयमादर्शयन्तीति वा विग्रहः ।

४०१–निरीक्ष्य प्रक्रमः कार्य इत्येवं व्यवहारोऽनुगतो भवति ।

४०२–नियतकालम्मूल्यास्वीकरणं परिक्रयणं भवति न तु क्रयणमात्रम् । तेन परिं परिवर्ज्य केवलं क्रीता इति वक्तव्यम् ।

४०३–अनेकधेत्यपास्य बहुधाऽसकृदिति वा प्रयोज्यम् । अनेकधेत्यत्र धाप्रत्ययः प्रकारे । बहुधेत्यत्र तु अविप्रकृष्टकालिकक्रियाभ्यावृत्तिगणने धाप्रत्ययः ।

४०४–स्वपाठ्यात्मपाठ्येति वा वक्तव्यम् । निजशब्दस्तु स्वकीयार्थकः । निजं सहजं भवति, अत एव तात्पर्यत आत्मीयं तदुच्यते । नास्य स्वशब्दवत्सर्वनामत्वमस्ति । न चायमात्मपर्यायवचनः ।

४०५–दृष्टिपथं गोचरयतीत्येवं विपरीतमुक्तं भवति । दृष्टिपथं गोचरं विषयं करोतीत्यर्थः प्रतीयते । दृष्टिपथस्य गोचरो भवतीति तु विवक्षितम् । अतो दुष्टो न्यासः ।

४०६–शिक्षाशुल्काद् विमोक्षणेनेति वक्तव्यम् । न हि शिक्षाशुल्कं नामाऽऽगो भवति यत्क्षम्येत । क्षमापणमिति त्वपप्रयोगः । आपुकोऽप्राप्तेः ।

४०७–भाषणानि चक्रुरिति वाच्यम् । भाषणं नाम क्रियते न च दीयते ।

४०८–चरणेनावताडितमिति वाच्यम् । द्विवचनेन नार्थः । बहुवचनमपि शक्यं प्रयोक्तुम् । नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न चरणैरवताडनानीत्यत्र भवभूतिप्रयोगे यथा । वसुंधराधिपत्ये पार्ष्णिर्दत्त इत्यपि शिष्टजुष्टा स्तुतिः ।

---

१. असकृत् इत्यर्थे प्रयोगः । २. आत्मना पठनीयेत्यर्थं गमयितुमिच्छति । ३. दृष्टिपथस्य विषयो भवतीत्यर्थे प्रयोगः । ४. अध्येतारः । ५. साग्रहम् ।

४०९–रघुः किल विश्वजिन्नामकं यज्ञं व्यधात्ख्यातिं च विस्तृतामगात् ।
४१०–केचिज्जीवा घ्राणशक्तिं रक्षन्त्येव न, परे तु प्रवृद्धां तां दधति ।
४११–तथाकथितानामस्पृश्यानामुद्धारे सम्प्रति साभियोगा[१] राजमन्त्रिणः ।
४१२–केचित्कतिपयसूत्रार्थग्रहणमात्रेण स्वान् गुरुदेशीयान्[२] समर्थयन्ते ।
४१३–वातेरितैरुल्लोलैः कल्लोलैराकुलो भवति कासारः ।
४१४–लुण्टाकेन धनिकस्य कण्ठो घोटितः सर्वस्वं चापहृतम् ।
४१५–लुठितसर्वस्वः श्रेष्ठी शुचा परिदुर्बलः कैरपि दिवसैः प्राणैरमुच्यत ।
४१६–काप्यभिख्या तदानीमभूत्पूर्णशशाङ्कस्य शारद्याश्चन्द्रिकायाः ।
४१७–नागरिकेण साम्प्रदायिकः पक्षपातो यत्नेन वारणीयः ।

---

४०९–यज्ञमाहार्षीदिति वक्तव्यम्, व्यतानीदिति वा ।

४१०–केषुचिज्जीवेषु घ्राणशक्तिर्नास्त्येव, परेषु सा प्रवृद्धा लक्ष्यत इत्येवं वक्तव्यम् । रक्षतिर्हि नात्रार्थे प्रयुज्यते । इदंजातीयकेष्वधिकरणनिर्देश एव व्यवहारानुपाती ।

४११–रूढ्याऽस्पृश्यानामिति वक्तव्यम् । तथाकथितानामिति विशेषणं तु विपरीतार्थमाह । तथाशब्दो हि सत्यवचनः, यथा वितथशब्दे । अस्पृश्या इति तेषां मिथ्याभिलाप इति विवक्षति ।

४१२–स्वशब्द आत्मवचन एकत्वे प्रयुज्यत आत्मवत् । एको नः सर्वेषामात्मेति, प्रत्येकं वाक्यपरिसमाप्तिरिति वैकत्वमुपपन्नम् ।

४१३–ऊर्मिषु महत्सूल्लोलकल्लोलावित्यमरादुल्लोलकल्लोलौ समानाभिधेयौ । तेन लोलैः कल्लोलैरिति वक्तव्यम् ।

४१४–घुट परिवर्तने भौवादिक आत्मनेभाषः । घुट प्रतिघाते तौदादिकः परस्मैभाषः । एतयोर्द्वयोरप्यर्थः प्रकृते न सङ्गच्छत इति दुष्प्रयुक्तम् । तेन कण्ठो बलवन्निरुद्ध इति वक्तव्यम् । कण्ठो निपीडित इति वा ।

४१५–रुठि लुठि स्तेय इति भ्वादिषु पठितौ । लुठ विलोडन इति तुदादिषु । प्रकृते स्तेयं विवक्षितमिति लुण्ठितसर्वस्व इति वक्तुमुचितम् ।

४१६–पूर्णस्य शरच्छशाङ्कस्य चन्द्रिकाया इति वक्तव्यम् । अल्पोऽर्थो बहुश्च शब्दडम्बर इति शारदानां वाचि लक्ष्यते न विशारदानाम् ।

४१७–सम्प्रदायादागतं साम्प्रदायिकं भवति । सम्प्रदायश्च गुरुशिष्यपरम्परयागतमनुशासनम् । तेनैकतमस्मिन्निकाये इति वक्तव्यम् । अथ सधर्मिणां स्यान्निकाय इत्यमरः । एकधर्मवतां समूहो निकाय इत्युच्यत इति तदर्थः ।

---

१. सोद्योगाः । २. गुरुकल्पान् ।

४१८—निहन्ता वैरकाराणां सतां बहुकरः सदा। ( भट्टौ ५। ७८ )
४१९—पूर्वं प्राणात्यये निपुणं परित्रातास्तैरिति तदीयमाभारमद्यापि शिरोभिर्वहामः।
४२०—नहि विद्यार्थिनां चरितशोधनं केवलमध्यापकेषु लम्बतेऽभिभावकेष्वपि[1]।
४२१—एतेनेदं निःसरति यद्दैवपुरुषकारावुभावपि कार्यसिद्धौ कारणतां यातः।
४२२—तस्मात्प्रजारञ्जने युक्तः स्याः, ते परमं धनं यश एवेति यतः।
४२३—ते च मे च साधारणमिदं कृत्यम्।
४२४—तिमिरगहनो जायते सर्वतोऽन्तः।
४२५—आदत्स्व मित्र सुमते तव वैदिके माम्।
४२६—विपत्सहनं नाम वीरस्य सहजः स्वभावोऽस्ति।

---

४१८—बहु कार्यं करोतीति दिवा-विभेति सूत्रेण टः। शुद्धयौगिकश्चायं शब्दः कविना प्रयुक्तः। तथापि खलप्वि अस्य रूढिः। तथा च कोषः—खलपूः स्याद् बहुकर इति। रूढिश्च बलीयसी योगादिति बहुकरशब्दो बलात्खलप्वं स्मारयति। तदनिष्टम्। तत्परिहार्यम्। सतां बहूपकारक इति तु वक्तव्यम्।

४१९—तदीयमुपकारभारं शिरसा वहाम इति वक्तव्यम्। आभार इत्यप्रयुक्तम्।

४२०—मातापित्रादिषु तदवेक्षकेष्वपीति वक्तव्यम्। अभिपूर्वो भवतिर्न्यक्करणे बाधने वा वर्तते न तु रक्षणेऽवेक्षणे वा।

४२१—इदमतोऽर्थादापद्यत इत्येवं वक्तव्यम्। अयं तद्वार्थिकोऽर्थ इति वा वक्तव्यम्।

४२२—पदात्पर एव निघातयुष्मदस्मदादेशा भवन्तीति वाक्यादौ व इत्यादेशो न प्राप्नोति।

४२३—न चवाहाहैवयुक्ते इत्यनेन चकारयोगे युष्मदस्मदादेशौ ते मे इत्येतौ न प्रसज्येते। तव च मम चेति वक्तव्यम्।

४२४—अन्तर् इत्यधिकरणवृत्ति मध्यमाह। नेदमन्तरङ्गाभिधाने शक्तम्। अन्तः शब्दोऽव्ययम्। तेन तद्विशेषणं नपुंसकं युज्यते तिमिरगहनमिति। सर्वमन्तर्गृहमिति वक्तव्यम्।

४२५—वैदिकं ते स्वमतं मां परिग्राहयेति वक्तव्यम्। न हि मते कश्चिदादीयते किं तर्हि मतं किमपि कश्चिदादत्ते।

४२६—स्वस्य भावः स्वभावः। स सहज एव भवतीति व्यभिचाराभावादनर्थकं विशेषणम्। भवभूतिस्तु स तस्य स्वो भावः प्रकृतिनियतत्वादकृतक इति विशेषणमपि प्रयुङ्क्ते। तत्तस्य स्वं दर्शनम्। वयं तु पश्यामः सोऽनर्थको वाक्प्रपञ्च इति।

---

१. संरक्षकेष्विति विवक्षितम।

४२७—इतो वनान्ताद्धूम्र उद्गच्छतीति वसतिस्तत्र संभाव्यते ।

४२८—शैत्येन हर्षादिना च रोमाञ्चपुलका जायन्ते ।

४२९—केचित्परमतनिन्दया स्वमतप्रशंसया च प्रजासु विरोधवह्निं दहन्ति ।

४३०—गतः स्वर्गं सम्राडिति कुटिललोकैर्मुखरितम् ।

४३१—कृतेष्वप्यतिमात्रायां युद्धसम्भारेषु देशो देशान्तरात् त्रस्यत्यस्य भूयो बलं स्यादिति ।

४३२—अज्ञा अपि स्वेषां दुष्कृतानां फलं नेच्छन्ति भोक्तुम् ।

४३३—प्राणिमात्राणि सुखमात्मन इच्छन्ति न दुःखमिति भूतनिसर्गः ।

४३४—मया मौखिकमुत्तरितः प्रश्नः । तेन प्रासदन्प्राश्निकाः ।

४३५—तदानीमयं नो देशः सुवर्णमयोर्थात्सम्पत्तिशाली बभूव ।

४३६—इमे श्लोकाः प्रक्षिप्ता इति यदात्थ तत्कथं जानासीति पृष्टोऽसौ जोषमभजत् ।

---

४२७—धूम्र धूमवद्भवति न तु धूमः । उद्गच्छतीत्यपास्याऽऽक्रामतीति प्रयोज्यम् ।

४२८—रोमाञ्चपुलकौ समानार्थकौ । समानार्थकाश्च पर्यायेणार्थं ब्रुवन्ति न तु युगपत् । तेन रोमाञ्चो जायत इत्येव साधु । बहुवचनेन नार्थः ।

४२९—दह भस्मीकरण इति धातुः । नात्र भस्मीकरणमर्थः । तेन ज्वलयन्ति ज्वालयन्तीति वा वक्तव्यम् ।

४३०—मुखरो वाचालो भवति । मुखरयति शब्दवन्तं करोतीत्यर्थो न तु शब्दयति शब्दमुच्चारयतीत्यर्थः । तेन कुटिललोकैः शब्दित व्याहृतं वेति वक्तव्यम् ।

४३१—अतिमात्रयाऽतिमात्रमिति वा साधु स्यात् । पूर्वत्र प्रकृत्यादित्वात्तृतीया ।

४३२—स्वस्य दुष्कृतानामिति वक्तव्यम् । आत्मवाची स्वशब्द एकत्वे प्रयुज्यते नियमेन । स्वस्येति कर्तरि षष्ठी । आत्मीयवचनतायां शेषे षष्ठ्यां बहुवचनेऽपि न दोषः ।

४३३—प्राणिमात्रमिति वक्तव्यम् । कृत्स्नाः प्राणिनः प्राणिमात्रम् । मात्रं कार्त्स्न्येऽवधारण इत्यमरः । मात्रशब्देनैकवचनान्तेनैव कार्त्स्न्येऽभिहिते बहुवचनेन नार्थः ।

४३४—मुखेनोत्तरित इति वक्तव्यं वाचेति वा । (न तु लेखेन) । तद्धितेन नार्थः ।

४३५—स्वर्णमयः सम्पत्तिशाली वा बभूवेति वक्तव्यम् । अर्थादिति ल्यब्लोपे कर्मण्युपसंख्यानमिति पञ्चम्यां साधु । तथापि मध्येवाक्यमेवंप्रयोगो न दृश्यते ।

४३६—तूष्णीमर्थे सुखे जोषमिति नानार्थवर्गेऽमरः । जोषमिति तूष्णीं भवति न तु तूष्णीम्भावः । तेनाऽभजदित्यनेनानन्वितं भवति । तेन जोषमास्तेति वक्तव्यम् ।

४३७–श्रीविष्णुदिगम्बराणां रागपरिवाहिणा गायनेन समं सभाकार्यमारब्धम् ।

४३८–एष हि मनुष्यस्वभावः परेषां हास्यास्पदतासाधने त्रुटिं न स्थापयन्ति ।

४३९–ऋषिमुनीनां शक्त्या सह स्वशक्तिर्न जातु तोलनीया ।

४४०–वृद्धो नाम मन्ददृष्टिरपि कर्णाभ्यां पश्यति, क्षीणश्रवणशक्तिरपि नेत्राभ्यां शृणोति । अर्थात् प्रकृतिरस्य क्षीणामेकेन्द्रियशक्तिमपरस्मिन्निन्द्रियेंऽशतोऽर्पयति ।

४४१–न चैवंविधं रूपकं कुत्रचिदन्यत्र दृष्टमिति पूर्वमेवोपरिष्टान्निगदितम् ।

४४२–शुचि मृदुलधवलसूक्ष्मवसनमास्तीर्य जलार्द्रा[1]पवनैरात्मानं निर्वापय[2] ।

४४३–संसारे चिरं संसरन्सुगतो महात्मा दुःखान्तं गवेषमाणो दयादाक्षिण्यादिधर्ममनुतिष्ठन्नन्तेऽपवृज्यते[3] ।

---

४३७–गायनो गायको भवति । गायति शिल्पमस्येति गायनः । ण्युट् चेति ण्युट् । तस्माद् गानेन गीतेनेति वा वक्तव्यम् ।

४३८–मनुष्याणां स्वभावो यत्ते परेषां हास्यास्पदतायाः साधने यत्नं न शेषयन्तीति वक्तव्यम् । सर्वनाम्नां प्रधानपरामर्शित्वमिति मनुष्याणां स्वभाव इत्यसमासेन निर्देशः कार्यः । तच्छब्देन मनुष्याः परामृश्येरन्यथा ।

४३९–ऋषिमुनीनां शक्त्या स्वशक्तिर्न जातु तुलनीयेति वक्तव्यम् । अत्र सहशब्देन नार्थः । अत्रार्थे तुलां करोति तुलयतीति प्रयोगो भवति न तु तुल उन्माने इत्यस्य चौरादिकस्य । तथा च मेघदूते प्रयोगः—प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैरिति ।

४४०–अर्थादिति पदं वाक्यादौ पदान्तरेणानन्वितं स्वातन्त्र्येण न प्रयुज्यते । तेन अयमर्थ इति वा एतदुक्तं भवतीति वा वक्तव्यम् ।

४४१–ग्रन्थपत्त्राणां पूर्वपूर्वेषामधस्तान्निवेशादुत्तरोत्तरेषां चोपरिष्टाद् इति यत्पूर्वपत्त्रेषु विन्यस्तं तदधस्तादुक्तं भवति यदुत्तरपत्त्रेषु तदुपरिष्टादिति व्यपदिश्यते । अत्र च किञ्चिदुक्तपूर्वं तेनाधस्तान्निगदितमिति वक्तुमुचितम् ।

४४२–वसनमाच्छाद्य, वसनं निवस्येति वा वक्तव्यम् । यद्यपि स्तृञ् आच्छादने इति स्तृणोतिराच्छादने पठितस्तथापि शय्यामास्तृणोतीत्यादिषु प्रयुज्यते न तु परिधानेऽस्य प्रवृत्तिः ।

४४३–संसरतिर्योन्यन्तरोपसंक्रमणे रूढः । ये देहाद् देहान्तरं गच्छन्ति ते संसारिणः । परिक्रामन् इति पर्यटन्निति वा वक्तव्यम् । गवेष मार्गणे इति चुरादिष्वदन्तः पठितः । तेन णिचि गवेषयमाणे इति साधु स्यात् ।

---

१. जलयुक्तव्यञ्जनस्य जलार्द्रेति संज्ञा । २. शीतलय । ३. अपवर्गं लभते ।

४४४—असन्तुष्टा इवास्मान्महतोऽपि प्रयत्नात्ते महीयांसं यत्नमातिष्ठन् सिद्धये ।

४४५—को हि मतिमानतितरलतरङ्गभङ्गसमाकुलमध्युषितविकरालनक्रचक्रवालं व्याप्तवाडवानलं पारावारमुत्सहेत बाहुक[1] उत्तरीतुम् ।

४४६—को नु समुत्तितीर्षुरसहायः पारं गन्तुं पारयति ?

४४७—व्यसनेष्वतिप्रसङ्गात्स दिने दिने दीनाद् दीनतरामवस्थां प्रतिपद्यते ।

४४८—वङ्गेषु नवद्वीपमण्डलान्तर्गते प्रथिते कृष्णनगरे वर्षमेकमतीतं प्रमथनाथो नाम कश्चिद् ब्राह्मणः प्रतिवसति स्म ।

४४९—धन्यः स देवदत्तो यः प्राणपणैरपि नित्यमापन्नार्तिप्रशमनं चक्रे ।

४५०—नहि तेन तस्य सुभाषितस्यार्थः प्रत्यक्षीकृतः स्वानुभवेन ।

---

४४४—महत्यप्यस्मिन् प्रयत्नेऽसन्तुष्टा इत्येवं वक्तव्यम् । प्रयत्नो ह्यसन्तोषस्य विषय इति वैषयिक्या सप्तम्या भवितव्यम् । प्रयत्नेऽलंबुद्धयो नेत्यर्थः ।

४४५—विकरालनक्रचक्रवालाध्युषितमिति कर्मणि क्ते स्यात् । पारावारो हि नक्रचक्रवालेनाध्युष्यते । उपान्वध्याङ्वस इत्याधारस्य कर्मत्वम् । यद्यध्युषितमित्यत्र गत्यर्थाकर्मकेति सूत्रेण कर्तरि क्त इति पश्यसि तदा यथास्थितेऽपि न दोषः । सूत्रकारो ह्यधिपूर्वस्य वसेराधारस्य कर्मसंज्ञां शास्ति । तेनात्र कर्मणि क्त इति प्रतीतिर्बलवती भवति । बाहुभ्यां तरतीति बाहुकः । नौद्व्यचष्ठन् इति ठस्तद्धितः । तरणमिह प्लवनम् ।

४४६—को न्वसहायः समुत्तरीतुमलम् इत्येवमल्पाक्षरतरं वाक्यं प्रयुञ्जीत प्राज्ञः । वृथा वाचं न तन्वीत ।

४४७—स दिने दिने दीनतरामवस्थां प्रतिपद्यत इति वक्तव्यम् । दीनादिति हेयम् । दीनादित्यत्र पुंस्त्वं नपुंसकत्वं वा कथम् । न हि ब्रूमः स पटोः पटुतरो भवतीति । किन्तर्हि स पटुर्भूत्वा पटुतरो भवतीति ।

४४८—इतो वर्षे वङ्गेषु नवद्वीपमण्डलान्तर्गते प्रथिते कृष्णनगरे प्रमथनाथ इत्यादिरुपन्यास एव निरस्तसमस्तदोष आश्रेयः । वर्षमेकं व्यतीतमिति मध्येवाक्यमनन्वितं गडुभूतं पदकदम्बकम् ।

४४९—प्राणपणेनापि नित्यमित्यादि वक्तव्यम् । प्राणाः पण इत्येकवचनं श्रेयः । पण इति ग्लहो भवति । प्राणाः पणत्वेन रूप्यन्ते तेन युक्तमेकवचनम् ।

४५०—न हि तेन तस्य सुभाषितस्यार्थो लोकव्यवहारेऽनुभूत इत्येवं वक्तव्यम् । स्वस्यानुभवः स्वानुभवः । स्वस्येति कर्तरि षष्ठी । अनुभवो नाम ज्ञानं भवति । प्रत्यक्षं च ज्ञानविशेषः । तेन यथास्थिते ज्ञानेन प्रत्यक्षज्ञानं लब्धमित्यर्थः प्रत्यायितो भवति । न चैष प्रत्याययियिषित इत्यलमनेन वाग्डम्बरेण ।

---

१. बाहुभ्यां तरतीति ।

४५१–महाभागो राजराजो नलो दुरोदरवशं[1] गतो राज्याद्विच्युतोभूत् ।

४५२–तदवनतेः साम्प्रतं साक्षात्त्वात्तत्रानुमानमनवकाशम् ।

४५३–गताः सम्प्रति विक्रमादिनृपतयो देववाण्याः परिपोषकाः । इदानीमन्यासां प्रष्टारः सन्ति न त्वस्याः ।

४५४–महानेष गभीरो विषयो विशेषतो मादृशां विषये ।

४५५–तनय एव पितुः स्नेहसर्वस्वमधिकरोति[2] ।

४५६–नहि धिषणोऽ[3]प्येतावताऽनेहसा शक्तो दुरूहाणीमानि शास्त्ररहस्यानि यथायथमाकलयितुम् ।

४५७–वल्गां संनियम्य मन्दीकुरु रथवेगम् ।

४५८–स्वयं च संस्कृतस्य राष्ट्रभाषारागमालपसि, सुतांश्च पारसीकादिभाषा अध्यापयसीत्यहो वचःकर्मणोर्विभेदः ।

४५९–हन्त कुत्र मतान्धः श्रद्धाजड आर्यविद्वेषी क्षुद्रहृदयोऽवरङ्गजीवः कुत्र चोदारधीर्न्यायप्रियः सर्वत्र समः शिवराजो महाराजः ।

---

४५१–राजराज इति कुबेरस्य रूढिः । तथा चामरः—मनुष्यधर्मा धनदो राजराजो धनाधिप इति । तेन परमराजो महाराज इति वा वक्तव्यम् ।

४५२–साक्षात्प्रत्यक्षतुल्ययोरित्यमरे साक्षाच्छब्दः प्रत्यक्षपर्यायः पठितः । तथापि लक्ष्येषु क्रियाविशेषणत्वेन प्रयुक्तो दृश्यते न तु विशेषणमात्रत्वेन । साक्षाद् द्रष्टरि संज्ञायाम् (५।२।९१) इत्यत्र सूत्रे यथा । तेन प्रत्यक्षत्वादिति वक्तव्यम् ।

४५३–अन्यासामादर्तारो मानयितार इति वा वक्तव्यम् । अवेक्षका इति वा ।

४५४–मादृशामित्येव । विषये इति तु परिहार्यम् । सम्बन्धमात्रं तु विवक्षितं न वैषयिकमधिकरणम् ।

४५५–स्नेहसर्वस्वमीष्ट इति वक्तव्यम् । स्नेहसर्वस्वेऽधिक्रियत इति वा ।

४५६–यथातथमिति वक्तव्यम् । यथायथं यथास्वमिति भवति । यथा ते यथायथं गृहाणि सम्प्रस्थिताः । स्वं स्वं गृहं प्रतिगन्तुं प्रवृत्ता इत्यर्थः ।

४५७–वल्गेति रश्मिवद्बहुत्व एव प्रयुज्यते । तथा च प्रयोगः—आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यत इति ।

५५८–राष्ट्रभाषात्वार्हतां गायसीत्येव संक्षिप्तं वचो निर्दुष्टं च । किं च राग इति गीतेन समानार्थको न । आङ्पूर्वो लपिरपि संबोधने वर्तते नोच्चारणे ।

४५९–वैषम्ये गम्ये द्वौ क्वौ प्रयुज्येते; न तु कुत्रशब्दो द्विरुच्यते । तथा चोक्तं द्वौ क्वौ महदन्तरं सूचयत इति । तत्कस्मादिति चेत् । व्यवहारे परतन्त्रा वयं न स्वतन्त्राः ।

---

१. दुरोदरं द्यूतम् २. ईष्ट इत्यर्थं इत्यभिमानः ३. धिषणो बृहस्पतिः । धिषणा बुद्धिः ।

४४४–असन्तुष्टा इवास्मान्महतोऽपि प्रयत्नात्ते महीयांसं यत्नमातिष्ठन् सिद्धये।
४४५–को हि मतिमानतितरलतरङ्गभङ्गसमाकुलमध्युषितविकरालनक्रचक्रवालं व्यासवाडवानलं पारावारमुत्सहेत बाहुक[1] उत्तरीतुम्।
४४६–को नु समुत्तितीर्षुरसहायः पारं गन्तुं पारयति ?
४४७–व्यसनेष्वतिप्रसङ्गात्स दिने दिने दीनाद् दीनतरामवस्थां प्रतिपद्यते।
४४८–वङ्गेषु नवद्वीपमण्डलान्तर्गते प्रथिते कृष्णनगरे वर्षमेकमतीतं प्रमथनाथो नाम कश्चिद् ब्राह्मणः प्रतिवसति स्म।
४४९–धन्यः स देवदत्तो यः प्राणपणैरपि नित्यमापन्नार्तिप्रशमनं चक्रे।
४५०–नहि तेन तस्य सुभाषितस्यार्थः प्रत्यक्षीकृतः स्वानुभवेन।

---

४४४–महत्यप्यस्मिन् प्रयत्नेऽसन्तुष्टा इत्येवं वक्तव्यम्। प्रयत्नो ह्यसन्तोषस्य विषय इति वैषयिक्या सप्तम्या भवितव्यम्। प्रयत्नेऽलंबुद्धयो नेत्यर्थः।
४४५–विकरालनक्रचक्रवालाध्युषितमिति कर्मणि क्ते स्यात्। पारावारो हि नक्रचक्रवालेनाध्युष्यते। उपान्वध्याङ्वस इत्याधारस्य कर्मत्वम्। यद्यध्युषितमित्यत्र गत्यर्थाकर्मकेति सूत्रेण कर्तरि क्त इति पश्यसि तदा यथास्थितेऽपि न दोषः। सूत्रकारो ह्यधिपूर्वस्य वसेराधारस्य कर्मसंज्ञां शास्ति। तेनात्र कर्मणि क्त इति प्रतीतिर्निर्मलवती भवति। बाहुभ्यां तरतीति बाहुकः। नौद्व्यचष्ठन् इति ठस्तद्धितः। तरणमिह प्लवनम्।
४४६–को न्वसहायः समुत्तरीतुमलम् इत्येवमल्पाक्षरतरं वाक्यं प्रयुञ्जीत प्राज्ञः। वृथा वाचं न तन्वीत।
४४७–स दिने दिने दीनतरामवस्थां प्रतिपद्यत इति वक्तव्यम्। दीनादिति हेयम्। दीनादित्यत्र पुंस्त्वं नपुंसकत्वं वा कथम्। न हि ब्रूमः स पटोः पटुतरो भवतीति। किन्तर्हि स पटुर्भूत्वा पटुतरो भवतीति।
४४८–इतो वर्षे बङ्गेषु नवद्वीपमण्डलान्तर्गते प्रथिते कृष्णनगरे प्रमथनाथ इत्यादिरुपन्यास एव निरस्तसमस्तदोष आश्रेयः। वर्षमेकं व्यतीतमिति मध्येवाक्यमनन्वितं गडुभूतं पदकदम्बकम्।
४४९–प्राणपणेनापि नित्यमित्यादि वक्तव्यम्। प्राणाः पण इत्येकवचनं श्रेयः। पण इति ग्लहो भवति। प्राणाः पणत्वेन रूप्यन्ते तेन युक्तमेकवचनम्।
४५०–न हि तेन तस्य सुभाषितस्यार्थो लोकव्यवहारेऽनुभूत इत्येवं वक्तव्यम्। स्वस्यानुभवः स्वानुभवः। स्वस्येति कर्तरि षष्ठी। अनुभवो नाम ज्ञानं भवति। प्रत्यक्षं च ज्ञानविशेषः। तेन यथास्थिते ज्ञानेन प्रत्यक्षज्ञानं लब्धमित्यर्थः प्रत्यायितो भवति। न चैष प्रत्याययियिषितं इत्यलमनेन वाग्डम्बरेण।

---

१. बाहुभ्यां तरतीति।

४६०–समराङ्गणे पुरुराजेनैकैकशतहस्तव्यवधाने द्विद्विशतं दन्तिनः स्थापिताः।
४६१–एकतो निसर्गात्तामसी भाद्ररजनी, तदुपरि द्विगुणं त्रिगुणं वा संघटितेन नीलघटासंस्तरेण निबिडमाच्छाद्यत वियदङ्गनम्।
४६२–मन्त्रिभवनं सुपरिष्कृत्य समरज्यत सुदृश्येन वर्णेन।
४६३–मन्दमारुतान्दोलिता काषायरागिणी महाराष्ट्रपताका कामप्यभिख्यामपुष्यत्।
४६४–जीविकार्थमाहिण्डमानानां[1] संस्कृतज्ञानां न कोऽपि वार्तां पृच्छति।
४६५–वयमेतान् दिष्ट्यावादेन भूयो भूयः संवर्धयामहे।
४६६–अस्य देशस्य नाम स्वतन्त्रदेशानां सूचीतो व्यवाच्छिद्यत चिराय।

---

४६०–हस्तशतव्यवहिता द्वे द्वे शते हस्तिनः संस्थापिता इत्येवं वक्तव्यम्। हस्तशतान्तरा हस्तशतान्तरिता इति वा। द्विशतमिति द्व्यधिकं शतमित्यस्मिन्नर्थे प्रयुज्यते न शतद्वये। संख्याशब्दाः क्वचिद् वृत्तौ वीप्सायां वर्तन्ते सप्तपर्णादिवत्, तेन द्विशब्दस्य द्विः प्रयोगो नापेक्ष्यते।
४६१–एकतस्तावन्निसर्गात्तामसी भाद्ररजनी, अपरतो नीलनीरधरपटलसंस्तरेणेत्यादि वक्तव्यम्। घटाशब्दो मेघमालां नाहेत्युक्तमधस्तात्।
४६२–मन्त्रिभवनं परिष्कृत्य समरज्यत सुदर्शनेन रागेणेत्येवं वक्तव्यम्। रागेण हि रज्यतेऽर्थः, 'तेन रक्तं रागादि'ति लिङ्गात्। रक्तस्याकारो वर्णः। रागजन्यो हि स भवति न तु रजनसाधनम्।
४६३–कषायेण रक्ता काषायी। तत्र रागशब्देन नार्थः। किं च रागो रजनसाधनं वा भवति लौहित्यं वा, न जातु वर्णः।
४६४–वार्ता प्रवृत्तिर्वृत्तान्त उदन्त इति पर्यायाः। वार्तां पृच्छति वृत्तान्तं जिज्ञासत इत्यर्थः। तेन न कश्चिद्दोषः।
४६५–दिष्ट्येत्यव्ययं क्रियाविशेषणत्वेन प्रयुज्यते सहर्षमिति चार्थः। तेन वादेन नार्थः। वर्धने वाक्प्रयोगोन्तर्भूतः। वर्धयामो वृद्धिमाशंसामह इत्यर्थः। तत्र सम्शब्दोऽस्थाने। संवर्धनं हि पोषणं भवति जलादिना पादपादीनां पयआदिना वा शिशुकादीनाम्। तदप्ययुक्तः। अणावकर्मकाच्चित्तवत्कर्तृकादिति परस्मैपदमेव युक्तम्।
४६६–अत्र व्यवच्छिदिर्व्यवच्छेदनपूर्वकेऽपनयने वर्तत इति सूच्या अपादानता। अपादाने चाहीयरुहोरिति तसिः।

---

१. पर्यटताम्।

४६७–विद्याकेन्द्रं वाराणस्येव परिगृह्यतां तावत्। कति वा तत्र राजप्रवर्तिताः सन्ति संस्कृतविद्याशाला यत्रेतिहासगणितादीनां सामान्यात्सामान्यमपि ज्ञानं कार्यते।

४६८–सहसैव मुसलधारावर्षणमवर्षीन्[1]मघवा।

४६९–स हि नित्यं सतर्कस्तिष्ठति, न क्षणमपि प्रमाद्यति। सोस्य महान् गुणः।

४७०–न तादृशं शौर्यमौदार्यं वा सम्प्रति समस्ति। सर्वं तत् कथावशिष्टं वर्तते।

४७१–साधारणसभ्यानामेव किम्, वन्यानामपि वर्तमानकाले सभ्यशिरोमणि-मन्यानामपि जातीनामयमेव देशः शिक्षागुरुः।

४७२–कैवल्यप्राप्तिरीश्वरेच्छायतना[3], न पुरुषयत्नतन्त्रेति भक्ताः।

४७३–शकटीवाहनादिकमभ्यासितस्तुरगः शिक्षित इत्युच्यते।

---

४६७–वाराणसीमेवाधिकृत्य प्रस्तूयतां विचार इत्येवं वक्तव्यम्। वाराणस्येव तावच्चिन्त्यतामिति वा श्रेयो वचः। परिग्रहः स्वीकारो भवति। समानमेव सामान्यम्। नहि सामान्यात्सामान्यतरं नाम किञ्चिदस्ति येन सामान्यादित्यत्र पञ्चमी विभक्ते इति पञ्चम्युपपद्येत।

४६८–धारासारैरवर्षद् देव इति वक्तव्यम्। मुसलशब्दो धारायामुपमानमुपमेयं वा न युज्यत इति व्यवहारः।

४६९–जागरूक इति वक्तव्यम्। सतर्क इति जागरूक इत्यर्थेऽप्रयुक्तम्।

४७०–कथाशेषतां यातमित्येवमुपन्यसितव्यम्। कथा शेषोऽस्येति कथाशेषम् (बहुव्रीहिः), तस्य भावस्तत्ता, ताम्। कथायामवशिष्टमित्येवं विग्रहे कथावशिष्टमित्यपि निर्दुष्टं भाति, तथापि प्रयोगोस्य नेति परिहार्यमेतत्।

४७१–पुरा वन्यानामधुना सभ्यशिरोमणिमन्यानामप्ययमेव देशः शिक्षागुरुः किमुत सामान्येन सभ्यानाम् इत्येवं वक्तव्यम्। तत्र सामान्येनेति प्रकृत्यादित्वात् तृतीयौपसंख्यानिकी।

४७२–आयतनमिति स्थानमुच्यते देवतायतनादिषु दर्शनात्। ईश्वरेच्छायत्तेति तु वक्तव्यम्।

४७३–शकटीवाहनाद्यभ्यासं कारितस्तुरग इत्येवं वक्तव्यम्। अभ्यासः परिशीलनं क्रियाभ्यावृत्तिर्भवति। तेनाभिपूर्वोऽस्यतिर्ज्ञानार्थको न, येन णिचि कर्तुः कर्मत्वं स्यात्।

---

१. वृषु सेचने इत्यस्माल्लुङि रूपम् २. जागरूक इति विवक्षति। ३. ईश्वरायत्ता इत्यर्थं विवक्षति।

४७४–इदानीमनेन वीरेण तथा पराक्रान्तं यथा न समग्रेपि निजस्यायुषि।
४७५–पुत्त्रस्य युद्धात्पलायनं मनस्विन्या जनन्या हृदये शल्यमिव प्राविध्यत।
४७६–शर्वर्या निबिडेऽन्धकारे न ददर्श हस्तो हस्तम्।
४७७–वत्सेऽलं लज्जया। उद्घाटयावगुण्ठनम्। प्रत्यभिजानातु त्वां भर्ता।
४७८–खलोल्लापान् बहूञ्छ्रावं श्रावं स उत्तमं[1] खेदमापेदे, तदुत्तरे चैवमूचे।
४७९–पूर्वे केपि राजापसदाः[2] प्रजानामुपरि भयानकमत्याचरन्।
४८०–सेयं कौरवी चमूर्भीष्माध्यक्षतायां परं पराक्रंस्यते किल।
४८१–पुत्त्रजन्मनि पितुर्हर्षातिशयः शरीरे न मीयते।
४८२–भगवता सृष्टेष्वतिविस्मयास्पदीभूतेषु वस्तुषु सुतरां प्रभाववद् इदमुदरं नाम।

---

४७४–आयुर्जीवनकाल इत्यसकृदुक्तम्। तेनायुः शब्दोऽस्थाने। न कृत्स्नेप्यतीते वयसीति वक्तव्यम्। नेतः पूर्वं कदाचिदित्येवं वा।

४७५–हृदयं शल्येनेवाविध्यतेति वक्तव्यम्। शल्यं हि विध्यति न तु स्वयं विध्यते।

४७६–एकोऽपरं नान्वभवत् इति, एकः सदेशे स्थितमपरं नालोकतेति वा, न प्राजानादिति वा वक्तव्यम्।

४७७–अपनयावगुण्ठनमित्येवोचितं वक्तुम्। अवगुण्टनं नाम न किञ्चिदुद्घाटनीयं भवति।

४७८–तदुत्तरे इत्यादेर्वाक्यखण्डस्य स्थाने तांश्चैवं प्रत्युवाचेति वक्तव्यम्।

४७९–प्रजास्वत्याचारा बभूवुरिति वक्तव्यं प्रजासु दारुणवृत्तयो वेति। अतिक्रान्त आचारमित्यत्याचारः। इदं प्रायेण विशेषणमिति प्रयुज्यते न तु विशेष्यमिति। आचरतिः सकर्मकः। उपमानादाचारे (३।१।१०) इत्यत्र शिष्यं पुत्त्रमिवाचरति पुत्त्रीयति शिष्यमित्युदाहृतत्वात्। अतिक्रम्य मर्यादामाचरन्नित्यत्याचरन्। तेन कर्मणि द्वितीया साम्प्रतिकी स्यात्।

४८०–भीष्माध्यक्षा, भीष्मेणाधिष्ठितेति वा वक्तव्यम्।

४८१–शरीरे न मातीति वक्तव्यम्। मा माने आदादिकोऽकर्मकः, स प्रयोक्तव्यः। ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः इत्यत्र माघे यथा।

४८२–विस्मयास्पदेषु वस्तुष्विति वक्तव्यम्। अभूततद्भावे च्विः। अभूततद्भावश्च नेह विवक्षित इति च्विना नार्थः। पदास्पदस्थानभाजनादीन्यजहल्लिङ्गान्येकत्वमतिक्रामन्त्यपि इष्टानि। भवादृशा एव भवन्ति भाजनान्युपदेशानामित्यत्र कादम्बर्यां तथा दर्शनात्।

---

१. वि बृद्धं, भृशम्। २. क्षुल्लका राजानः।

४८३–पवनः परागवाही रथ्यासु वहन् रजस्वलो भवति ।

४८४–अयमर्थः सर्वजनीन[1] इत्येतदर्थे जिज्ञासा नोदेति ।

४८५–तेषां परिवारे[2] निजाभ्यस्तास्तास्ता भाषाः प्रचरन्ति ।

४८६–सुकृतिनस्ते पूर्णमायुरुपभुज्य पुत्त्रपौत्त्रादीनां सत्तायां सुखं नाकमारुरुहुः ।

४८७–अनेनैव सर्वं स्थालीपुलाकं परीक्षितं स्यात् । नार्थो विस्तरेण ।

४८८–लोके शास्त्रे च सूर्यस्याब्जिनीपतिः सहस्रकिरण इत्यादीनि नामधेयान्यधिविन्दामः तान्युपपादनामर्हन्ति ।

४८९–स्पष्टविनिवेदनाय क्षमां चेद् दास्यन्ति सन्तः स्वमभिप्रायममायं वक्ष्यामि ।

---

४८३–रजःकृष्यासुतिपरिषदो वलच् इति रज इति प्रातिपदिकाद्वलचि रूपसिद्धिः । इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते । तेनेह न भवति—रजोऽस्मिन्ग्रामे विद्यत इतीति काशिकावचनात्स्त्री रजस्वला भवतीति प्रयोगः, न तु पवनः पन्था वा रजस्वलो भवति ।

४८४–आत्मन्विश्वजनभोगोत्तरपदात्खः । (५।१।९) इत्यत्र सर्वजनाट्ठञ् खश्चेति वार्तिकं पठितम् । तेन सर्वजनीन इति सिध्यति, अर्थस्तु न संगच्छते । तत्र तस्मै हितमित्यधिकृतम् । तेन सर्वेभ्यो जनेभ्यो हितः सर्वजनीन इति भवति सार्वजनिक इति वा । प्रतिजनादिभ्यः खञ् (४।४।९९) इत्यत्रापि गणे सर्वजनशब्दः पठितः । तत्र साधुरिति तत्राधिकारः । तेन सर्वस्मिञ्जने साधुः सार्वजनीन इति भवति । सर्वेषां विदित इति च विवक्षितोऽर्थः ।

४८५–परिवारः परिजनो भवति न तु कुटुम्बम् । निजशब्द आत्मीयवचनः, न त्वात्मवचनः ।

४८६–पुत्त्रपौत्त्रादिषु जीवत्स्विति वक्तव्यम् । जीवेष्विति वा ।

४८७–स्थालीपुलाकन्यायेनेति वक्तव्यम् । स्यात्पुलाकस्तुच्छधान्ये इत्यमरः । यथास्थिते त्वनन्वयो विस्पष्टः ।

४८८–नामधेयानि विन्दाम इत्येव साधु । अधिवेदनं नाम परिणीतायां जीवन्त्यां भार्यायामपरस्या वेदनम् । तत्रैवार्थेऽधिपूर्वो विन्दतिर्वर्तते ।

४८९–स्पष्टविनिवेदनं चेत्क्षंस्यन्ते (क्षमिष्यन्ते) सन्त इत्यादिरुपन्यासे एवास्तङ्गतदोषः । तादर्थ्ये चेह नास्तीति चतुर्थ्यप्रसक्तिः ।

---

१. सर्वेषां विदितः, सार्वलौकिक इत्यर्थे प्रयोगः । २. कुटुम्ब इति विवक्षति ।

४९०–नानाविष्कारगर्विष्ठानां राष्ट्राणां संमुखे कतमद्वा वर्तमानमिदं भारत-वराकम् ।

४९१–सेयमनपायिनी स्मृतिमुद्रेतिहासप्रेमिणां हृदयान्नोपमृष्टा भवेत् ।

४९२–यावदेव संभाजेश्चित्रवधस्य संवादः पुण्यपत्तनमाससाद तावदेव प्रचण्डः क्रोधानलः प्रजज्वाल प्रजासु ।

४९३–धर्मवेदेरुपरि लोमहर्षणं किमपि काण्डमभ्यनीयतेति पप्रथे प्रवादः ।

४९४–महान् खलु राशि प्रजानां विश्रम्भो'ऽभूत् ।

४९५–यच्छक्त्या सकला जीविन इमे जीवा विभान्ति, भूम्यादयश्च विधृतास्तिष्ठ-न्ति तं विभुं परमेश्वरमुपास्स्व ।

४९६–स्वामिप्राणपरित्राणाय तुरुष्कवीरैर्निजशरीराणां राशयः कृताः ।

४९७–पदानि नाम संस्कृत्य संस्कृत्योत्सृज्यन्ते । तानि शक्यन्ते यथाकामं पौर्वा-पर्येणान्वेतुम् ।

---

४९०–राष्ट्राणां किं वेति वक्तव्यं संमुखे इति त्याज्यम् । अत्र षष्ठ्येव पर्याप्ता विवक्षितमर्थमर्पयितुम् । वराकं भारतमित्येवं व्यासेन वक्तव्यम् ।

४९१–इतिहासप्रणयिनामिति वक्तव्यम् । प्रेमन्निति नकारान्तं पुंनपुंसकयोः । तत्र इनिर्दुर्लभः । अदन्तात्तद्विधेः । व्रीह्यादिषु चास्य पाठो नास्ति । प्रमृष्टा भवेदिति साधु स्यात् । उपपूर्वस्य मृजेस्तत्रार्थे प्रयोगादर्शनात् । हृदया-दिति पञ्चमीमपेक्ष्य व्यग्रता स्यादिति प्रयोज्यम् ।

४९२–चित्रवधस्य वार्तेति वक्तव्यम् । न हि संवादो वृत्तान्तपर्यायः समस्ति ।

४९३–काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिष्वित्यमरः । प्रकृते च नैकतमोऽप्यर्थो घटते । नाटकमिति तु वक्तव्यम् । हर्षशोकादयो अभिनीयन्ते, नाटकं तु प्रयुज्यते, प्रयोगेणाधिक्रियत इति वा । तेन प्रायुज्यतेति वक्तव्यम् ।

४९४–विस्रम्भ इति तु वक्तव्यम् । विश्रम्भ इति तु प्रमादो भवति ।

४९५–जीविन इति विशेषणं व्यर्थम् । जीवशब्देनैव गतार्थत्वात् । जीवतीति जीवः । जीवपुत्रो ममाचार्य इत्यादिषु जीवत्पुत्र इत्यर्थोपलब्धेश्च ।

४९६–स्वशरीराणि शवराशीकृतानीति वक्तव्यं स्वशरीराणि शवराशयः कृतानीति वा । षष्ठ्या तु नार्थः ।

४९७–पौर्वापर्येणानुगमयितुम् इति वक्तव्यम् । पदं पदान्तरेणान्वेतीति व्यवहारः । कश्चित्पदं पदान्तरेणानुयद् अनुगमयति ।

---

१. विश्वास इत्यर्थ इति विश्वसिति ।

४९८–इदमिदानीं भूयस्तरां विचारणीयम् ।

४९९–परैराक्रान्ता भयभीतास्ते मातरि[1] पुरुषा[1] कान्दिशीका[2] बभूवुः ।

५००–माङ्गलिको जन इष्टदेवतामभिध्याय कृत्यं प्रक्रमते ।

५०१–अत्र विद्यालये शिक्षकाणां संख्या त्रिंशदस्ति ।

५०२–कस्यचित्किमपि नो हरणीयं मर्मवाक्यमपि नोच्चरणीयम् ।

५०३–अहो विनयोऽस्याश्छात्रायाः । को न्वस्या गुरुः स्यात् ।

५०४–स्वार्थसाधनभावनया कृतं महत्तरमपि कर्म श्रीगीतायाः सिद्धान्ते क्षुद्रमस्ति ।

५०५–सर्वधर्मान् परित्यज्येति गीतार्थे विसेष्मीयते लोको भगवान् सर्वधर्माणां परित्यागार्थे वक्तीति ।

---

४९८–भूयो विचारणीयमित्येव पर्याप्तम् । प्रकर्षवतोऽपि प्रकर्षविवक्षास्तीति चेद्यथान्यासं साधु ।

४९९–भीता इत्येव पर्याप्तम् । भयशब्देन नार्थः ।

५००–अभिध्या तु परस्य विषये स्पृहेत्यमरात् परकीयेऽर्थे ममायं स्यादिति संकल्पः । तेनेष्टदेवताम्प्रध्यायेति वक्तव्यम् ।

५०१–अत्र विद्यालये त्रिंशत्संख्याकाः शिक्षकाः, अत्र विद्यालये त्रिंशच्छिक्षका इति वा वक्तव्यम् ।

५०२–वाच उद्गरण उत्पूर्वश्चरतिर्णिजधिकः प्रयोगमवतरति । तत्र व्यक्तवाचां समुच्चारणे इति सूत्रकारप्रयोगः, येनोच्चारितेन सास्नालाङ्गूलककुद-खुरविषाणिनामर्थसम्प्रत्यय इत्यादि भाष्यकारप्रयोगश्च मानम् ।

५०३–केचित् क्वचिण्णेष्यण्कार्यमिच्छन्तीति वचनसमाश्रयेण णान्ताच्छात्रशब्दा-न्ङीपं कृत्वा छात्रीमिति स्त्रियामिच्छन्ति । अपरे ङीपि दृढतरमानं नास्तीति टापि च्छात्रेति व्यवहार्यं पश्यन्ति । वस्तुतश्छात्रशब्दः स्त्रियामप्रवृत्तपूर्व इति नाधुनातनैर्बलात्तत्र प्रवर्त्यः । यथाऽलक्षणमप्रयुक्ते इति वार्तिकम-प्रयुक्ते लक्षणप्रवृत्तिं वारयति । तेन शिष्याया इति वक्तव्यम् ।

५०४–श्रीगीतायाः सिद्धान्त इति व्युदस्य वाक्यान्ते 'इति गीतासु निर्णीतोऽर्थ' इत्येवं न्यसनीयम्, 'इति गीतासिद्धान्त' इत्येवं वा । गीताशब्दं प्रायेण भूम्न्येव प्रयुञ्जते पुरा प्रयोगचणाः । उपनिषदो हि भगवता गीता इति गीता इत्युपनिषद्विशेषणमिति युज्यते बहुवचनम् ।

५०५–परित्यागं ब्रवीतीति वक्तव्यम् । अर्थशब्देन नार्थः ।

---

१–१ मातरि शूराः, गेहेनर्दिनः तत्पुरुषः समासः । २. भयाद् द्रुताः ।

५०६–स्वानि वर्णाश्रमकर्माणि मल्लक्ष्येणैव प्रवर्तयेत्यनुशास्ति गीतास्वर्जुनं कृष्णः ।

५०७–यत्र भूभागे एकजातेरेकधर्मस्य समानसभ्यतासंस्कृतिभाषाणां च जना वसन्ति स भूभागस्तज्जाते राष्ट्रमुच्यते ।

५०८–अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ ।
निश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥

५०९–क्लीबपर्यायवचनस्तृतीयप्रकृतिरिति वा साधु स्यात् तृतीयाप्रकृतिरिति वेति विवेचय ।

५१०–श्रीमधुसूदनसरस्वतीपादोऽपि भक्तिरसतत्त्वं विस्तरेण व्यवर्णयत् ।

५११–इन्द्रदत्तो देवदत्तस्य वक्षसि प्रहरति विशिखेन ।

५१२–पञ्चकृत्वः पचतीति भवति, पञ्च पाका इति च, उत्तरत्र कृत्वसुच्कुतो न ?

५१३–रुणद्धि मौनस्य मिषेण वाणीम् । ( नैषधे ३।३० )

---

५०६–ममोद्देशेन, मामुद्दिश्यैवेति वा प्रयोज्यम् ।

५०७–यत्र भूभागे सजातयः सधर्माणः समसभ्यतासंस्कृतिभाषा लोका वसन्ति स भूभागस्तेषां राष्ट्रमुच्यते इत्येवं वक्तव्यं व्यवहारानुगमाय । लोकानां सभ्यतादयो भवन्ति न तु सभ्यतादीनां लोकाः । प्रधानं लोका उपसर्जन सभ्यतादयो गुणाः ।

५०८–प्रवृत्तेत्यर्थे लग्नेति पदमशक्तम् । लग्नमित्यासक्तमाह ।

५०९–उभयं साधु । तृतीया प्रकृतिरित्यसमासः । पुंस्त्रियौ द्वे प्रकृती भवतः । नपुंसकं तृतीया प्रकृतिरुच्यते । समासे तु तृतीयप्रकृतिरित्यपि । पुंवत् कर्मधारयजातीयदेशीयेष्विति पुंवद्भावः ।

५१०–उत्तरपदं पादशब्दो ( चरणशब्दोपि ) बहुत्वे प्रयुक्तः पूजावचनो भवति नत्वेकत्वे । सरस्वतीपादा इति तु वक्तव्यम् ।

५११–देवदत्तं वक्षसीत्येवं वक्तव्यम । यद्यप्यङ्गाङ्गिभावे सम्बन्धेऽङ्गिनो देवदत्तादेः षष्ठीष्यते, तथापि प्रहरणक्रियायाः कर्मत्वं तत्रेच्छन्ति व्यवहारकोविदाः, अकीर्तिते चाङ्गेऽधिकरणत्वम् । ऋषिप्रभावान्मयि नान्तकोपि प्रभुः प्रहर्तुं किमुतान्यहिंस्त्रा इत्यादिषु तथा दर्शनात् ।

५१२–क्रियाभ्यावृत्तिगणने कृत्वसुज्विहितः, न तु क्रियामात्रगणन इति हेतोः ।

५१३–मौनमेव मिषः, तेन मौनमिषेणेति समासेन वक्तव्यम्, मौनेन मिषेणेति व्यासेन वा । षष्ठ्या नार्थः, भेदप्रतीतेः ।

५१४–कौसल्ययाऽसावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत्। (भट्टी १। १४॥)

५१५–मायिकेस्मिन्सर्गे किं लौकिकाः किं परीक्षकाः सर्वेऽपि प्राणिनो दुःखं प्रतिकूलतया वेदयन्ते।

५१६–पिपासायां लग्नायां सर्वस्य सलिलमिष्टं भवति।

५१७–यदेवोप्यते बीजं तदेव कृत्यते न ततोन्यत्।

५१८–महाराजेन दानपत्रेस्मिन्हस्ताक्षरं कृतमिति नेदमप्रमाणम्।

५१९–सा लक्ष्मीर्ययोपविधत्ते परेषाम्।

५२०–हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मना

ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम्।

..........................विद्याख्यमन्तर्धनम्।

---

५१४–यद्यपि जनिक्रियाया माताऽधिकरणं मता, कौसल्यायां रामोऽजायतेति व्यवहारात्, तथापि प्रसवक्रियायां तस्याः कर्तृत्वं न वार्यत इति कौसल्ययेत्यनुक्ते कर्तरि तृतीया नासाध्वी। केकयीत इत्यत्र तु भवनक्रियां प्रति मातुरधिकरणता प्रसिद्धाऽप्रतिषिद्धेति सप्तम्यास्तसिः सार्वविभक्तिकः।

५१५–मायिक इत्यविद्याकार्यमुच्यते, तेन नात्र किमपि दूषणम्। लौकिकाः स्युः परीक्षका वेति वक्तव्यम्।

५१६–पिपासायां जातायामिति वक्तव्यम्। अत्रार्थे लग्नशब्दोऽशक्तः। लोकभाषाया अनुकुर्वन्नेवं प्रयुङ्क्ते।

५१७–तदेव प्ररोहतीति वक्तव्यम्। एवमेव पूर्वे व्याजह्रुः। बीजस्य परिणामे फले लक्षणा चेदिष्टा, लूयत इति वक्तव्यम्। न हि कृतिस्तद्विषयः। प्रतिनियतविषयाः शब्दाः।

५१८–हस्ताक्षरं कृतम् इत्याधुनिको वाचां मार्गः। पूर्वे तु महाराजेन स्वहस्तो दत्त इत्येवं प्रयुयुजिरे।

५१९–ययोपकुरुत इत्येव युक्तं वक्तुम्। विपूर्वो धाञ् करोत्यर्थमाह, उपपूर्वस्तु स उपक्रियां नाह। शब्दशक्तिस्वाभाव्यात्।

५२०–ह्यर्थिभ्य इत्यत्र हि शब्द आदौ प्रयुक्तः। स दोषः। हि शब्दो वाक्यादौ न दृश्यते क्वचित्क्वचिदपि विद्वांसो नियताम्।

५२१–आश्रयामि यदि कल्पपादपं
सोपि याति सहसावकेशिताम् ।
मादृशां नयनकोणगोचरः
सागरोऽपि मरुभूमिसोदरः ॥

५२२–उपरिष्टात्प्रेमाणं प्रदर्शयसि, हृदये च हालाहलं विषं धत्से किमेतत्सदृशं तेऽभिजातस्य ।

५२३–निरन्तरं वर्षता देवेन कदर्थिता यात्रिणोऽवग्रहं[1] याचन्ते ।

५२४–तान्हसन्ति खलु चम्पकद्रुमाः फुल्लदम्भतः ।

५२५–परब्रह्मणि प्रणते सर्वे देवाः प्रणता भवन्ति ।

५२६–तदानीं सर्वेयं भारतभूश्चन्द्रगुप्तस्य सम्राजोधिकारेऽवर्तिष्ट ।

५२७–एतद्देशस्वातन्त्र्यप्रतिलब्ध्यै श्रीसुभाषः प्राणानपि पणेऽदधात् ।

५२८–पूर्वस्मात् खञ्जस्य मृगेन्द्रस्य सम्प्रति मेरुदण्डोपि विशीर्णः ।

---

५२१–सोदर्यः समानोदर्य इति वा वक्तव्ये यत्सोदर इत्याह तत्रास्य समानार्थकः सहशब्दोभिप्रेतः, तस्य बहुव्रीहौ पाक्षिकः सभावः सुलभः । तेन नात्र किञ्चिद् दुष्यति । अकृते सभावे सहोदर इति बहुलं प्रयुज्यते । तं तु देशं न पश्यामि यत्र भ्राता सहोदर इत्यत्र श्रीरामायणे यथा ।

५२२–उपरिष्टादित्यपहाय बहिरिति प्रयोज्यम् ।

५२३–अवग्रहोऽवग्राहश्च वर्षप्रतिबन्धेऽनावृष्टौ वर्तेते । विरामं याचन्त इति तु वक्तव्यम् । तद्धि विवक्षितम् ।

५२४–फुल्लदम्भत इत्यत्र फुल्लमिति कुसुमपर्यायत्वेन प्रयुक्तम् । फुल्लमिति तु विकसितमाह लोध्रकुसुममिव प्रफुल्लमित्यत्र यथा ।

५२५–यद्यपि गुरुं नमतीत्यादिषु नमिः सकर्मको दृष्टस्तथापि नतः, प्रणतः, आनत इत्यादिषु निष्ठा कर्तरि दृष्टा । एवञ्जातीयको व्यवहारः । तेन परब्रह्मणि प्रणत इत्युक्ते परं ब्रह्म स्वयं प्रणन्तृ भवतीत्यनिष्टार्थप्रतीतिर्जायते, सा मा जनिष्टेति परब्रह्मणि नमस्कृते इति वक्तव्यम् । सर्वे देवा नमस्कृता भवन्तीति च ।

५२६–यथास्थिते न दोषविशेषः । चन्द्रगुप्ते सम्राज्यध्यभूत् इति तु ज्यायान् सन्दर्भणविधिः ।

५२७–प्राणानामपणिष्टेति वक्तव्यम्, प्राणान्पणी चकारेति वा ।

५२८–पूर्वम् इति वक्तव्यम् । तच्च क्रियाविशेषणम् । पञ्चम्या नार्थः ।

---

१. वर्षविराममभिप्रेति ।

५२९--दुर्विधा इमे कर्मकराः पर्णकुटीरेषु कथं कथमपि स्वानि दुर्दिनानि यापयन्ति ।

५३०--चतुर्णां वर्णानामेष बालः काममप्यपूर्वां प्रज्ञां विजृम्भयति ।

५३१--अनुस्थियेहं रक्षिवर्गेणेति दृष्ट्वा स तस्करः कान्दिशीको दिशो भेजे ।

५३२--किमबलेति मां बलात्करिष्यसि जाल्म ?

५३३-अभ्युपायश्चेच्चिन्तितोऽसेत्स्यत्कदैवाभीष्टार्थलाभेन भाग्यवानभविष्यम् ।

५३४--त्वमिदानीं पूर्णतो ममाधिकारे वर्तसे ।

५३५--एकतस्तु नैसर्गिक एव सान्द्रारण्यनिकुञ्जपुञ्जेषु गाढोन्धकारः स पुनर्द्विगुणीकृतस्तमिस्रासन्तमसेन ।

५३६--कस्य नु रक्षायां भवेन्मे वत्सा वराकी ।

५३७--विविधविधरूपाणि दधतीयं नृपनीतिः कस्यातिसन्धानाय नालम् ।

---

५२९-मेघाच्छन्नेऽह्नि दुर्दिनमिति कोषाद् दुर्दिनशब्दः साभ्रे वासरे रूढः । विषमाणि दिनानीति तु वक्तव्यम् ।

५३०-चतुर्वर्णोऽयं बाल इत्येवं तद्धितवृत्त्या चित्तवति नित्यमिति टञो लुकि वक्तव्यम् । चतुर्णां वर्णानाम् इति तु प्रचरल्लोकभाषाऽनुकारमात्रं संस्कृताभासम् ।

५३१-कान्दिशीकोऽभूद् इति वा वक्तव्यं दिशोऽभजतेति वा । कान्दिशीको हि मुख्यया वृत्त्या भयाद्रणाद्द्रुतमाह । गौण्या तु पलायितं जनम् । तेन कान्दिशीकशब्दप्रयोगो न दुष्यति ।

५३२-किमिति प्रश्ने । बलात् प्रसभं हठादित्यनर्थान्तरम् । करोतेर्णिच् प्रयोक्तव्यः । कारयिष्यसीति प्रयोक्तव्यम् ।

५३३-कदैवेत्यपनीय प्राकृतमाम् इति वाच्यमवाच्यतायै ।

५३४-पूर्णत इत्यस्य स्थाने सर्वथा, अत्यन्तमिति वा प्रयोक्तव्यम् ।

५३५-एकत इति न विवक्षितमर्थमाह, नैसर्गिकस्तावद् इत्येवं वक्तव्यं व्यवहारेणाऽविसंवादाय ।

५३६-कस्य नु रक्षायामित्यादिरपूर्वः संस्कृते न्यासः । कं शरणं यायाद् इत्येवं वक्तव्यम् । को नु रक्षकः स्याद् वत्साया मे वराक्या इत्येवं वा ।

५३७-विविधविधरूपाणीत्यपास्य वाग्डम्बरं विविधरूपाणीत्येवं संक्षिप्तं वचो वाच्यम् । विविधशब्देऽन्तर्गतो विधाशब्दो न पृथक्प्रयोगमर्हति ।

५३८--आद्याद्यस्य गुणं त्वेषामवाप्नोति परः परः। ( मनु० १। २० )
५३९--महतोप्येनसो मासात्त्वचैवाहिर्विमुच्यते। ( मनु० २। ७९ )
५४०--अत्र पुस्तके केनापिचन वैजात्येन तादृश्या छात्रोपकृत्या भाव्यम् इति सङ्कल्पयामः।
५४१--प्रमाणान्तरानुपलम्भादस्मिन्विषये जोषम्भावमेव शरणं मन्वाना तूष्णीमास्महे।
५४२--अध्यासितं च वृषलेन वृषेण राज्ञाम् ( मुद्रा० ३। १८ )।
५४३--दिनत्रयस्यावसरं निष्कास्यास्मिन्नुत्सवे समुपतिष्ठन्तामत्रभवन्त इति प्रार्थये।
५४४--भोजस्य समये राजाज्ञायां सर्वासां प्रजानां कृते साक्षरत्वमनिवार्यमासीत्।

---

५३८--नित्यवीप्सयोरित्यनेन शास्त्रेणाद्यस्याद्यस्येति प्राप्तम्, यथा परः पर इति वीप्सायां द्विरुक्तौ, तथापि स्मृतीनां छन्दोवद्भावात् सुपां सु-लुक्-इत्यादिना सुब्लुग् बोध्यः।

५३९--महताप्येनसेति तूचितम्। अन्यथा एकस्मिन्नेव वाक्ये विमुच्यत इति कर्मकर्तरि शुद्धे कर्मणि च प्रयोगः स्वीकार्यो भवति। तच्चर्षिशीलेन विसंवदति।

५४०--अत्र पुस्तके केनचनेति वा केनापीति वा वक्तव्यम्। निपातद्वयेन नार्थः।

५४१--जोषमास्महे इति तु वक्तुमुचितम्। पूर्वं जोषम्भावशब्दप्रयोगात्। जोषम् इति मकारान्तमव्ययं तूष्णीमर्थे। तथा चामरः—तूष्णीमर्थे सुखे जोषम् इति।

५४२--प्रायेण वृषवृषभर्क्षभादयः शब्दा उत्तरपदे वर्तमानाः प्रशस्तवाचका भवन्ति। क्वाचित्कतया पृथक्त्वेनापि प्रयोगो दृश्यते। तेन वृषेण राज्ञामित्यपि निर्दुष्टम्। प्लवङ्गमानामृषभेण युद्धे इति श्रीरामायणे (६।५९।१) प्रयोगदर्शनात्।

५४३--दिनत्रयं व्यापारान्तरं विहायेति संस्कृते शिष्टजुष्टः प्रकारः, स जोषणीयः। नूत्नप्रकारान्तरकल्पनया नास्माऽऽयासनीयः। दिनत्रयमित्यत्यन्तसंयोगे द्वितीया।

५४४--अत्र बह्वाकुलीकृतम्। भोजो राजा। तस्य समये राजाज्ञेत्युच्यमाने राजान्तरस्य सेति प्रतीतिर्भवन्ती न वार्यते। राजाज्ञायामिति सप्तम्यपि नोपपत्तिमती। कृते इत्यप्यनपेक्षितं पदम्। तच्च कारणवृत्ति तादर्थ्यवृत्ति वा। अनिवार्यमित्यपि यद्वारयितुमनर्हमशक्यं वा तदाह, न त्ववश्यसम्पाद्यम्। तदिदमित्थमनाकुलीक्रियताम्—श्रीभोजे वसुमतीं शासति सर्वाः प्रजाः साक्षराः ( कालाक्षरिकाः ) स्युरिति शासनमभूत्।

५४५—इदानीन्तनो जीवनसंघर्षस्तावदतीव जटिलो विषमश्च संवृत्तः।
५४६—परस्परैः संलपन्तो वयं तत्रैवाभुञ्ज्महि विश्रान्तिं चान्वभवाम।
५४७—ते तथा भापयितव्या यथा भविष्यति काले इतो मुखं कर्तुं नामापि न गृह्णीयुः।
५४८—उपरि शिरसो घटं धारयति।
५४९—त्यागस्तपस्या च नः संस्कृतेरात्मा, शब्दान्तरेऽध्यात्मप्रधानेयम्।
५५०—सर्वाणि मतमतान्तराणीह भारते वर्षे प्रचरन्ति न वार्यन्ते, मतिनानात्वं हि सहजमिति।
५५१—यदि म्लेच्छैः सन्धास्यामस्तदा जीवन्त एव मरिष्यामः।

---

५४५—अत्र जीवनसङ्घर्ष इति पदं विवक्षितमर्थं नार्पयति। संघर्षो हि स्पर्धा पराभिभवेच्छा भवति, न त्वभियोगः (यत्नविशेषः)। जटिलविषमे च समानार्थके पदे। तयोरेकतरं शक्यं हातुम्। तेन सर्वदोषापहतयेऽद्यत्वे प्राणयात्राऽतिविषमेति वक्तव्यम्।

५४६—यद्यपि परस्परैरित्यत्र बहुवचने न कश्चिद् दोषस्तथाप्येकवचनप्रयोगो ज्यायान्। परस्परेण स्पृहणीयशोभं न चेद् इदं द्वन्द्वमयोजयिष्यदिति कुमार एकवचनप्रयोगः कविकृतो व्यवहारमनुरुन्धे।

५४७—इतो मुखं कर्तुमित्यादेर्वाक्यस्य स्थान इत आगमनचिन्तामपि परिहरेयुरित्येवं इहागमनचिन्तामपि मा स्म कार्षुरित्येवं वा वक्तव्यम्। तस्यार्थस्य नामापि न गृह्णीयादिति तमर्थमत्यन्ताय परिहरेदिति वाक्यार्थं नाभिलपति। तादृश उपचारः संस्कृते न दृष्टः।

५४८—अत्र सामीप्यं सदपि न विवक्षितम्। औत्तराधर्यमेव तु विवक्षितम् इत्युपर्यध्यधसः सामीप्य इति द्विर्वचनं न।

५४९—संस्कृतिः संस्कार इत्यनर्थान्तरम्। अधुनातनास्तु तत्तच्छिक्षादिसंस्कारसंस्कृतायाः कस्याश्चिज्जातेराचारविचारसमुच्चयेऽस्य संकेतमभ्युपयन्ति। पूर्वे तु सभ्यताशब्दमेवात्रार्थे प्रयुयुजिरे। शब्दान्तरे इति प्रचरद्भाषानुकृतिः। नैषा संस्कृते भाषितभङ्गी। आत्मप्रधानेयम् इत्युक्तं भवति इत्येवं वक्तव्यम्। अध्यात्मम् इत्यव्ययीभावः। आत्मानमधिकृत्य अध्यात्मम्। इदं च प्रधानशब्देनोत्तरपदेन दुःश्लिष्टम्।

५५०—मतमतान्तराणीत्यत्र मतान्तरशब्दो हेयः। मतानीत्येव पर्याप्स्यति। नहि मतानीत्युक्ते विवक्षितोऽर्थोऽनभिहितो भवति।

५५१—जीवन्तोपि मरिष्याम इति विरुद्धवदाभासं विहाय जीवा अपि मृता इव, जीवन्तोपि मृतप्राया मृतकल्पा इति वा वक्तव्यम्।

५५२–मनोरमा अमी दरिद्राणां स्वप्ना मरुमरीचिकामात्रा एवावतिष्ठन्ते ।

५५३–कृत्यं महत्ते समयो लघीयान् ।

५५४–यदासौ शरं लक्ष्यीकरोति तदा कलहंसध्वनिरमुष्य समाधिं विघटयति ।

५५५–इह देशे सम्प्रत्याध्यात्मिकी समुन्नतिरुपेक्ष्यते । परिणामतो जनतायां दयादाक्षिण्यादिगुणानां विकास उपरुध्यते ।

५५६–त्यजत वा पिपासितामिमां धरां स्वरक्तेन तर्पितां वा समाचरत ।

५५७–अद्य मे प्रभातं सुप्रभातं यच्चिरकाङ्क्षितदर्शनः प्रियसुहृद् दृष्टः ।

५५८–एतस्य लक्ष्मीपुत्रस्य कृते किं नाम दुरापं जगति ।

५५९–इहं ग्रामटिकायां भिक्षाचरणाय न सन्ति बहव ऋद्धिमन्तो जनाः ।

---

५५२–मरुमरीचिकामात्रम् इति तु वक्तव्यम् । मात्रं कार्त्स्न्येऽवधारण इति कोषान्मात्रशब्दोऽवधारणे वर्तमानो नपुंसकत्वे नियतः । मयूरव्यंसकादिः समासः ।

५५३–अल्पीयानिति तु प्रयोक्तव्यम् । अल्पमिति महच्छब्दस्य प्रतियोगि न तु लघु ।

५५४–शरं लक्ष्यं करोतीति विपरीतमुच्यते । न हि मृगव्याधः शरं लक्ष्यीकरोति किन्तर्हि मृगम् । यदाऽसौ शरसन्धानं करोतीत्येवं वक्तव्यम् ।

५५५–परिणामत इत्यपहाय तस्यायं परिणामो जनतायां ''उपरुध्यत इतीत्येवं वक्तव्यम् । परिणामत इत्यस्य स्थाने 'तेन' इति प्रयोक्तव्यं लाघवाय ।

५५६–प्रायेणाङ्पूर्वश्चरतिरनुष्ठाने वर्तते न तु विकारेऽवस्थान्तरापादने वा । तथापि वयं नरेन्द्रं सत्यस्थं भरत चरामेति श्रीरामायणे प्रयोगदर्शनादवस्थान्तरापादनेऽस्य प्रवृत्तिर्न दोषाय ।

५५७–अद्य मे सुप्रभातमित्येव युक्तम् । प्रभातं सुप्रभातमित्यनर्थकः समभिव्याहारः । न हि प्रभातं भाति, किन्तर्हि रात्रिः । रात्रिः प्रभाता ( भातुमारब्धा ), रात्र्या प्रभातम् इति वा प्रयोक्तव्ये प्रभातमित्येव प्रयुङ्क्ते संक्षेपरुचिः कुशलः प्रयोक्ता ।

५५८–'कृते' इति कारणादित्यर्थे रूढम् । प्रकृते नायमर्थः प्रत्यायियिषित इत्येतेन लक्ष्मीपुत्रेण किं नाम दुरापमित्येवं विपरिणमय्य वक्तव्यम् ।

५५९–भिक्षाचरणं हि भिक्षार्थं पर्यटनं भवति । तेन भिक्षायै, भिक्षालब्धये भैक्षार्जनाय इति वा वक्तव्यम् ।

५६०—इह हि नो युगयुगागतं दारिद्र्यं यथापेयात्तथा कार्यो यत्नः।
५६१—तेभ्यो भिक्षायां प्रभूतं धनधान्यादि मे मि दिति चिन्तयामि।
५६२—अयि पिपीलिके, ऊढभारापि कथं सुखं पलायसे?
५६३—शतशताद्यासम्भृतहृदयो भिक्षुको भिक्षार्थं नगरं प्रस्थितः।
५६४—एतस्या आख्यायिकाया विषये काश्चन विदुषामभिमतयः।
५६५—यस्याः ( भरतभुवः ) काश्मीरभूमिः स्फुटनिटिलतटे रम्यकाश्मीररेखा।
५६६—निर्वाणदीपे किमु तैलदानम्।
५६७—कोयं नु रागस्तव भावमित्सु त्यक्तोसि यैस्तांस्त्यज मित्रवादान्[1]।

---

५६०—आ युगेभ्य आगतमिति वक्तव्यम्। समासे युगशब्दद्विरुक्तिर्न शास्त्रेणानुशिष्टा न च व्यवहारेणानुमोदितेति परिहार्या। असमासेनैवायमर्थो निर्वक्तव्यः, तेन युगशब्दः प्रधानं भवति। आङभिव्याप्तौ।

५६१—भिक्षयेति तृतीया प्रयोज्या। मे मिलेदिति पराणुद्य मया लभ्येतेत्येवं वक्तव्यम्। न हि मिलतेरयं विषयः।

५६२—पलायसे इत्यस्थाने। पलायते इति भयादिना विद्रुतो भवतीत्यर्थे प्रयोगमवतरति। शीघ्रगमनमात्रे तु नास्य प्रवृत्तिर्दृष्टा। तेन 'त्वरसे' इति प्रयोक्तव्यम्।

५६३—आशाशतसंभृतहृदय इत्येवं वक्तव्यम्। समासे द्विरुक्तेर्विधायकं शास्त्रं नास्ति। आशानां बहूनि शतानीत्यर्थस्तु समासशक्त्यैव गंस्यते।

५६४—विदुषां मतय इत्येवं निर्दुष्टं वचः स्यात्। अभिमतिरभिमान इत्यनर्थान्तरम्। अभिमानश्च मिथ्याकल्पना भवति, आत्मनि संभावना गौरवारोपो वा।

५६५—काश्मीररेखेत्यस्य स्थाने काश्मीरजरेखा, काश्मीरजन्मरेखेति वा वक्तव्यम्। काश्मीरम् इति तु पौष्करे मूले रूढम्।

५६६—निर्वाणे दीपे इति तु वक्तव्यम्। दीपे इति भावलक्षणा सप्तमी। दीपस्य भावो निर्वाणताप्राप्तिरिति विधेयम्। विधेयेन च समासो न। अधिकरणसप्तम्यां तु न दोषः।

५६७—आत्मानं ये मित्रं वदन्ति ते मित्रवादा इति व्युत्पत्तिलभ्येपि सत्यर्थे नास्यात्रार्थे प्रयोगः। मित्रब्रुवशब्द एव प्रयोक्तव्यः। यथा कश्चिद् आत्मानं ब्राह्मणं ब्रूतेऽब्राह्मणोऽपि सन् स उच्यते ब्राह्मणब्रुव इति, एवं मित्रब्रुव इति व्याख्येयम्। प्रकृते मित्रब्रुवान् इति प्रयोज्यम्।

---

१. मित्रब्रुवान् इत्यर्थे प्रयोगः।

५६८–ते मौलिकीरनूदिता वा कृतीः प्रकाशनार्थं प्रेषयितुमनुरुध्यन्ते ।

५६९–सनातनादेव कालान्मनीषिभिरस्याऽऽस्तम्बब्रह्मपर्यन्तस्य लोकस्याध्ययने क्रियते साभिनिवेशं यत्नः ।

५७०–सर्वविश्वपरिरक्षणे विपुलशक्तिरखिलेश ।
अन्यमना इव लक्ष्यसे, मयि पापे करुणेश ॥

५७१–सेयं नः संस्कृतिर्वेदे वर्णितोषेव पुराणी युवतिः ।

५७२–स्वस्य संस्कृते रक्षायै सतत प्रयतते प्राणपणेनापि प्रत्येकं राष्ट्रम् ।

५७३–प्राध्यापकस्य श्रीभट्टाचार्यस्य सांयात्रिकत्वं दीर्घेऽस्मिन्नध्वनि मेऽवलम्बनमभूत् ।

५७४–परं विषीदामि यतो न पारये परस्परं संलपितुं चिराय वै ।

---

५६८–मूलाद् आगतं मौलं भवति । मौला मन्त्रिणः पितृपैतामहा उच्यन्ते । मूलाद् आगता कृतिरित्युक्तेर्नार्थः कश्चित् स्फुटति । किंलक्षणा सा भवतीति विशिष्य न ज्ञायते । मूलमनुज्झित्वा प्रवृत्तेति चेन्नायं विवक्षितोऽर्थः । तेन अयोनिजाः कृतीरिति वक्तव्यं स्वस्योपज्ञा इति वा । प्रेषयेयुरित्यनुरुध्यत इत्येवं वाक्यशेषः कल्पनीयः । भिन्नकर्तृकतायां तुमुन्दुर्लभः । अनो रुध कामे दिवादिः । अनुरुध्यन्ते इत्यस्य प्रार्थ्यन्ते इति नार्थः । काम एषणम् इच्छा भवति, न प्रार्थना ।

५६९–सनातनशब्दः पुरातनापरपर्यायो न । सनातन इति नित्यमाह । सनाभवः सनातनः । तेन 'सुदूरमतिक्रान्तात्कालादा' इत्येवं वक्तव्यम् । अत्राङ् अभिविधौ वेदितव्यः ।

५७०–इह बहाकुलीकृतम् । समानार्थकयोः सर्वविश्वशब्दयोः साकं प्रयोगो दुष्यति । प्रयोक्ता तु विश्वशब्दो जगन्नामेति भ्रमति । विपुलशक्तिरिति प्रातिपदिकार्थमात्रे प्रथमा प्रयुक्ता साऽपि दुष्यति, इष्यते चामन्त्रितम्, तेन विपुलशक्ते इति वक्तुमुचितम् । अन्यथा वाक्यभेदप्रसङ्गः ।

५७१–उषा इवेति वक्तव्यम् । उषस् इति स्त्रियां देवतावाचि सकारान्तम् ।

५७२–प्रत्येकं राष्ट्रमिति दुष्टम् । प्रत्येकमित्यव्ययीभावो यथार्थे वीप्सायाम् । राष्ट्राणि प्रत्येकं प्रयतन्त इत्येवं न्यसनीयम् ।

५७३–सांयात्रिकः पोतवणिग् भवति । इममर्थमजानान एवं प्रयुङ्क्ते । समानयात्रिकत्वमिति प्रयोक्तव्यं स्यात् ।

५७४–संलपितुमित्यनेनैव संगतयोरालाप उक्तो भवति । तेन परस्परमिति गडुभूतम् पराकृत्यम् ।

५७५—धृतां न मां स्तौति मृतां न शोचति ।

५७६—जहीहि मार्गं समयो विलम्बते ।

५७७—साक्षात्सरस्वतीसधर्मेव श्रीवाचस्पतिमिश्रः ।

५७८—चतुरब्दावस्थ एष बालोऽबालप्रज्ञः कस्य न प्रियः ।

५७९—तथालब्धेन धनेन कथमपि भोजनादिव्ययं सम्पादयन्ती सा तत्रैव न्यवसत् ।

५८०—विवर्त इति दार्शनिकस्य शब्दस्य कोऽर्थ इतीदानीं विमृश्यम् ।

५८१—सरुजं चरणं विलेपनसंवाहनादिना स्वस्थमापाद्य कञ्चित् कालं सुखं समविशम् ।

५८२—माघमासस्य चतुर्दशदिनाङ्के कुमारिकायाः सुलोचनायाः परिणयविधिर्निरवर्त्यत ।

---

५७५—धृतामिति धृङ् अवस्थाने इत्यस्य निष्ठायां टापि रूपम् । तेन नात्र किञ्चिद् दुष्यति ।

५७६—जहीहि मार्गमित्यस्य स्थाने पन्थानं देहीति युज्यते वक्तुम् । एष व्यवहारः । समयोऽतिक्रामतीत्येवं वक्तव्यम् । समयातिवर्ती चेतनोऽचेतनो वा पदार्थो विलम्बतेऽवस्रंसते न तु समयः ।

५७७—अत्र साक्षात्सरस्वती श्रीवाचस्पतिमिश्र इत्युच्यतां सरस्वतीसधर्मा श्रीवाचस्पतिमिश्र इति वा । साक्षात्सरस्वतीसधर्मेति त्वपार्थकं वचः । साक्षादित्यनेन सरस्वतीरूपः स इत्युच्यते, सरस्वतीसधर्मेत्यनेन च तत्सदृश इत्यर्थे विशेषः ।

५७८—चतुर्वर्षः, चतुर्हायण इति वा वक्तव्यम् । अवस्थाशब्देन बाल्यादिवय उच्यते ।

५७९—भोजनादिव्ययं निर्वहन्तीत्येवं वक्तव्यम् । एवं हि विवक्षितोऽर्थोऽर्पितो भवति ।

५८०—दार्शनिकः शब्द इत्यश्रुतचरः संस्कृते प्रयोगः । कश्चित्कापिलः काणादो वा दार्शनिको भवति, न तु शब्दः । दर्शनेषु परिभाषित इति वा व्यवहृत इति वेति वक्तव्यम् ।

५८१—स्वस्थं सम्पाद्य स्वस्थतामापाद्येति वा वक्तव्यम् ।

५८२—चतुर्दशदिनाङ्के इति कल्पितो नूत्नो व्यवहारः परम्परीणेन व्यवहारेण विसंवदतीति नादृत्यः । 'चतुर्दशे दिने' इत्येव पर्याप्स्यति । अङ्कशब्देन नार्थः ।

५८३–यानानि यूनः प्रष्ठान्ययनानि नयन्ति ।

५८४–परैरास्कन्नेस्मिन्देशे नार्यस्त्यजन्ति भूषणमोहम् ।

५८५–वयोगते किं वनिताविलासः ।

५८६–वीरस्य तस्य मृत्योः प्रतिशोधं चीनानां रक्तेन करिष्यामः ।

५८७–आबालवृद्धं सर्वेऽपि नागरिका हार्दमभिनन्दनं प्रयच्छन्ति सैनिकेभ्यः ।

५८८–भूयान् कार्यविस्तरो महता कालेन सेत्स्यतीति किमत्र चित्रम् ।

५८९–यो हि पततोऽपि पतत्रिणो विशिखस्य स्वस्य लक्ष्यान्करोति स कृतपुङ्खो धानुष्कः ।

५९०–सर्वेषां मुहूर्तानां शास्त्रार्थप्रतिपादक एवायमन्यतमः प्रबन्धः स्यादिति भ्राम्येन्मतिः केषाचित् ।

५९१–एष कर्णान्ताकृष्टमौर्विर्विश्वामित्रस्याध्वरं रक्षंस्तिष्ठति सौमित्रिः ।

---

५८३–प्रष्ठानीत्यस्थाने प्रयोगः । प्रष्ठोऽग्रगामिनीति सूत्रेण प्रष्ठ इत्यग्रगन्तरि निपातितः । अग्रगतानीति तु वक्तव्यम् ।

५८४–भूषणमोहमिति मोहार्थे प्रचरद्भाषानिरूढं संस्कृतेऽभिमन्यमानः शारदप्रतिभः कश्चित्प्रयुङ्क्ते । भूषणप्रियत्वमिति तु वक्तव्यम् ।

५८५–वयोगते किं वनिताविलास इत्यत्र भावलक्षणायां सप्तम्यामभ्युपेतायां वयसि ( तारुण्ये ) गते ( सति ) इत्येवं व्यासेन वाच्यम् । विवृतोऽयमर्थः पूर्वत्र ।

५८६–प्रतिशोधमित्यपहाय प्रतिकरिष्याम इत्येव प्रयोज्यम् । यद्यप्यृणं शोधयति, वैरे ऋणत्वारोपेण वैरं शोधयतीत्युच्यते, प्रतिशोधशब्दस्य व्यस्तस्य समस्तस्य वा प्रयोगो न दृश्यते । प्रतिशोधे प्रतिशब्दोप्यनर्थकः ।

५८७–हार्दमिति हृदिस्थं भवति प्रेमा वा । तेन हृदयेन सहार्दमिति वा वक्तव्यम् । अभिनन्दनं नाम क्रियते न तु दीयते । तेन कुर्वन्ति सैनिकानाम् इत्येवोचितम् । सहार्दमभिनन्दन्ति सैनिकान् इति तु ज्यायसी विधा ।

५८८–भूयान् कार्यकलाप इति वक्तव्यम् । शब्दविषये विस्तरोऽन्यत्र विस्तार इत्यन्यदेतत् ।

५८९–पतत इति संचरतो गतिमत उड्डयमानान् इत्यर्थः । लक्ष्यशरव्यादयः शब्दा कविकृतिष्वेकवचनान्ताः क्लीबे प्रयुज्यन्ते । कृताः शरव्यं हरिणा तवासुरा इत्यत्र यथा । तेन लक्ष्यं करोतीति वक्तव्यम् ।

५९०–भ्रमिर्भौवादिकः प्रयोक्तव्यः । दैवादिकस्तु परिभ्रमणे वर्तते ।

५९१–कर्णान्ताकृष्टमौर्वीक इत्येवं समासान्तं कृत्वा वक्तव्यम् । उपसर्जनह्रस्वत्वं बाधित्वा कब्भवति समासान्तः परत्वात् ।

५९२–वारुणीमदविशङ्कमथाविश्वक्षुषोऽभवदसाविव रागः। (शिशु०)।

५९३–स्वतन्त्रतारक्षणमहामख आत्मानं जुहुतेति विनीयते स्म जनता श्रीलाजपतरायेण।

५९४–अहो अभिरामोऽस्य गुणानां ग्रामः।

५९५–कामन्दकीयनीतिसारस्याध्ययनं कौटलीयार्थशास्त्राध्ययने सोपानतां करिष्यति।

५९६–पत्रिकाभ्योपि धनोपकारो वितीर्यते।

५९७–तेन भूतकालिकी स्थितिः परिचेतुं न पार्यते।

५९८–पूर्वैस्त्वात्मानं विजिज्ञासस्वेत्यत्र नैर्भर्यं न्यस्तम्।

---

५९२–अत्राविरित्यस्य व्यवहितः प्रयोगः शङ्क्यते। कविस्वातन्त्र्यादिदमिति मल्लिनाथः। गतिश्चेति सूत्रे पक्षद्वयं स्थितम्—धातोः प्राक्प्रयुक्तानामेव प्रादीनां निपातानां गतिसंज्ञेति संज्ञानियमपक्षः। गतिसंज्ञका एते धातोः प्रागेव प्रयोक्तव्या इति प्रयोगनियमपक्षः। आद्येऽदोषश्चरमे तु दोषः। साक्षात्प्रभृतिष्वाविःशब्दस्य पाठाद् वैकल्पिक्यस्य गतिसंज्ञा। तेन पक्षे गतिसंज्ञाया अभाव इति व्यवहितप्रयोगो न दुष्यतीत्यन्ये।

५९३–जुहुतेत्यत्र विनीयत स्म जनतेत्येवं वाच्यम्। आचार्यः शिष्यं शास्त्रे विनयत इति प्रयोगो न तु शास्त्रं विनयत इति। कस्यां कलायामभिविनीते भवत्यौ इति च मालविकायामभिविनयविषयस्य सप्तम्या निर्देशोप्यस्मदुक्तं समर्थयते।

५९४–गुणग्राम इति समासेनैवायमर्थोऽभिधेयः। अत एव वार्तिककारस्य ग्रामच्-प्रत्ययस्य कल्पना।

५९५–सोपानतां यास्यति, सोपानभावं गमिष्यतीत्येवं वा वक्तव्यम्। सोपानता सोपानभावो भवति न तु सोपानकर्म। तस्य भावस्त्वतलाविति भावे त्वतलोर्विधेः।

५९६–पत्रिका धनेनोपक्रियन्त इत्येवं वक्तव्यम्।

५९७–भूतः कालोऽस्या इति भूतकाला स्थितिरिति बहुव्रीहिणा वक्तव्यम्। यथा-स्थिते त्वयं दोषः। भूतः कालोऽस्या अस्तीति 'भूतकालिका' इति मत्वर्थीये ठनि टापि स्यात्। भौतकालिकी इति वा स्याद्भूते काले भवा ठञि।

५९८–निर्भरं सातिशयं भवति। नैर्भर्यमिति भावप्रत्ययान्तमिति त्वाभिधानिकानामप्यविदितम्। अत्र वक्तुः कोऽभिप्राय इति दुष्करमुन्नेतुम्। परमः पुरुषार्थ इति निर्दिष्टम् इति तदभिप्रायः स्यात्।

५९९–अद्यत्वे प्रातिस्विके पुरुषे तस्य तात्त्विकभावे च सुतरामुदास्महे ।
६००–संस्कृतवाचोभिवृद्धिमधिकृत्य निर्भरेण भाषितं सभाध्यक्षेण ।
६०१–परःसहस्रं विद्वांसस्तत्र समवेताः ।
६०२–इदं पञ्चशत्यापि वर्षाणां लुप्तमासीत् ।
६०३–मीमांसा प्रातिहार्यं भजति गुणगणं यस्य सङ्ख्याति साङ्ख्यः । ( हरिवंशे भारतप्रदीपे द्वितीयो मङ्गलश्लोकः )
६०४–जाह्नवीतीरपद्यं तु भवन्मते लगेन्नहि ।
६०५–किं पश्यसि श्रेणिभूतानि शेरते रक्षांसीतीष्यते श्रेणीभूतानीति वोभयं वेति ।
६०६–कथं तपस्यति शत्रून् इति ( चान्द्रव्याकरणे १।१।३७ ) ।
६०७–कारागतैस्तैर्या यातना अनुभूयन्ते नालं ता वर्णयितुं वाग्मिनाऽपि ।

---

५९९–प्रातिस्विकमित्यसाधारणं भवति । प्रतिस्वं यथायथं भवमिति तद्विग्रहः । पुरुषे एरुषे यत्स्वालक्षण्यं यच्च तत्त्वं तत्रेति वक्तव्यं, तथा हि विवक्षितोऽर्थोऽर्पितो भवति ।
६००–निर्भरं भाषितमिति वक्तव्यम् । निर्भरमिति क्रियाविशेषणम् । विस्तरेण, न्यक्षेण प्रपञ्चेनेति वा वाच्यम् ।
६०१–परस्सहस्रा इति वक्तव्यम् । सहस्रात्परे इति विग्रहः ।
६०२–इतः पञ्चशत्यामपि वर्षाणामिदं लुप्तमासीदिति वक्तव्यम् । यतश्चाध्वकालनिर्माणं तत्र पञ्चमी । अत्र इत इति पञ्चम्यास्तसिः । तद्युक्तादध्वनः प्रथमासप्तम्यौ । कालात् सप्तमीति पञ्चशत्यामित्यत्र सप्तमी । इतः पञ्चसु वर्षशतेष्वपीत्ययं न्यासः शोभनतरः ।
६०३–संख्याति साङ्ख्य इत्यत्र 'संख्याति' इत्यप्रयुक्तम् । सम्पूर्वस्य ख्या प्रकथन इत्यस्य तिङि प्रयोगो नेति न्यासकारः । तेन संचष्टे इत्येव प्रयोगमर्हति ।
६०४–लगिरत्रास्थाने । न हि पद्यं लगति । संगतार्थं न स्यात्, अनन्वयं स्यादिति वा वक्तव्यम् ।
६०५–च्व्यर्थेऽभूततद्भावे गम्यमाने च्वौ चासति श्रेण्यादयः कृतादिभिरित्यनेन समासे श्रेणिकृता इति साधु । च्वौ तु सति कुगतिप्रादय इति नित्यसमासे श्रेणीकृता इत्यपि नासाधु ।
६०६–रोमन्थतपोभ्यां वर्तिचरोः इत्यनेन तपश्चरणेऽर्थे तपस्यतीति भवतीति पाणिनीयाः । अर्थान्तरे तापने तु तपः प्रातिपदिकात्क्यङं नेच्छन्ति ते ।
६०७–अलंशब्दो हि शक्तमाह न शक्यम् । अलं भूषणपर्याप्तिशक्तिवारणवाचकम् इत्यमरः । तेन नालं वर्णयितुं वाग्मिनोऽपीति वक्तव्यम् ।

६०८–सेव्यते स्म प्रजाकूटैर्विशेषेण मधूत्सवः ।
६०९–उद्घाट्यतां मञ्जूषायाः पिधानम् ।
६१०–भवन्तमेव च गुरुलाघवं पृच्छामि । ( शा० ५ )
६११–अधिस्यन्दं प्रववृतिरे चमूचराः । ( शिशु० १।७।५० )
६१२–सप्तत्याभ्यधिकं यातं सहस्रं परिवत्सराः । ( राजतरङ्गिण्याम् १।५२ )
६१३–न चोपलेभे वणिजां पणायाम् । ( भट्टौ ३।२७ )
६१४–शीघ्रमुच्यताम् । नितरां समुत्सुकं श्रवणविधौ मे चेतो न कालव्याजं सहते ।
६१५–पुत्रोऽस्य दिष्ट्या जातः, समृद्धा गुरुजनाशिषः ।
६१६–को नु खल्वभिप्रायो मुनिसंगिराम् ।

---

६०८–प्रजाकूटैरिति कूटशब्दोऽस्थाने । कूटं राशिर्भवति । प्रजागणैरिति प्रजाभिरिति वा प्रयोक्तव्यम् । यदि तु कुत्साऽभिधित्सिता तर्हि प्रजापसदैरिति वक्तव्यम् ।
६०९–मञ्जूषोद्घाट्यते न तु पिधानम् । पिधानं त्वपनीयते ।
६१०–गुरुलाघवमिति द्वन्द्वैकवद्भावे रूपम् । पूर्वपदे भावप्रधानो निर्देशः । गौरवं च लाघवं चेति गुरुलाघवम् । संज्ञापूर्वको विधिरनित्य इति णित्त्वप्रयुक्ता पूर्वपदस्यादिवृद्धिर्न ।
६११–अधिस्यदमिति साधु । स्यदो जवे इति जवेऽर्थे स्यदशब्दो निपातित आचार्येण ।
६१२–अत्र वाक्ये सहस्रमिति संख्येये वर्तते । परिवत्सराश्च संख्येयाः । तेन याता इति बहुवचनान्त प्रयोक्तव्यम् ।
६१३–पणेर्व्यवहारार्थकाद् आयप्रत्ययः कृतो भट्टिना, तद्वृत्त्या विरुध्यते । पणायान् इति पाटान्तरं जयमङ्गलायां टीकायां धृतम् । तत्रापि महता क्लेशेन निर्वाहः ।
६१४–कालक्षेपं सहत इत्येवं वक्तव्यम् । व्याजो हि दम्भो वा भवति अपदेशो वा । प्रयोक्ता त्वज गतिक्षेपणयोरित्यतो व्युत्पन्नं व्याजशब्दं व्याक्षेपेऽर्थे प्रयुङ्क्ते शुद्धयौगिकतां चाद्रियते, रूढिं च नाद्रियते, स दोषः ।
६१५–दिष्ट्याऽस्य पुत्र इत्येवमानुपूर्वीको न्यास इष्यते । दिष्ट्येत्यव्ययमानन्दे वर्तते । वक्ता स्वं हर्षं व्यञ्जयन्नाह—पुत्रोऽस्य जात इति । तेन हर्षव्यञ्जकेन पदेन पूर्वं निपतितव्यम् ।
६१६–यद्यपि संगृणातिः प्रतिज्ञाने वर्तते, सम्पूर्वको गीःशब्दस्तु प्रतिज्ञावचनो न दृष्टः । अनभिसंहितश्च प्रतिज्ञावचनार्थ इति मुनिगिराम् इत्येव वक्तव्यम् ।

६१७–तादृशेन चिरकालावस्थायिना मनसा हविष॰ · · · · अयजन्त इति स्वेषामेव परोक्षेणाभिधानम् ( अथर्व० ७।५।३ इत्यत्र सायणः )

६१८–सद्यः प्रकाशितेनानेन ग्रन्थेनाध्येतॄणां कृते महानुपकारः समपादि ।

६१९–अयं ग्रन्थः कैयटस्याधारेण कृत इत्युपादेयः ।

६२०–एकस्य प्रक्रियाग्रन्थस्योपर्यपरः प्रक्रियाग्रन्थो निरमीयत ।

६२१–शिवः सर्वैर्देवैर्निजनिजगृहानाप मखतः ।

६२२–प्रवृत्ते चावयोर्वादे प्रयाताः सप्त वासराः । (क० स० सा० ४।२३)

---

६१७–स्वस्येति तु वक्तव्यम् । आत्मवचनः स्वशब्द एकत्व एव प्रयुज्यते यथात्मशब्दः । काममात्मीयवचनो बहुत्वेपि प्रयुज्यते यथापेक्षम् । अत्र चात्मीयवचनता नेति कस्माद् बहु विजानताऽपि भाष्यकारेण बहुवचनं प्रायोजीति न विद्मः ।

६१८–सद्यः प्रकाशितेनेत्यादौ वाक्ये 'कृते' इति गड्डुभूतम् । कृते इति कारणादित्यर्थमाचष्टे । स च प्रकृते न सङ्गच्छते । अध्येतॄणां महानुपकारः समपादीत्यनेनैव विवक्षितार्थलब्धिः ।

६१९–कैयटेनाधारेण निर्मितं इत्येवमुच्यमानं साधु स्यात् । कैयटो ह्याधारः । तेनोपपन्नं सामानाधिकरण्यम् ।

६२०–आनन्तर्येऽर्थे उपरिशब्दोऽशक्तः । तेनैकस्य प्रक्रियाग्रन्थस्यान्वपरः प्रक्रियाग्रन्थो निरमीयतेति वक्तव्यम् । अनुशब्दः पश्चादर्थेऽव्ययं कर्मप्रवचनीयो नेति षष्ठ्याः साधुत्वं नातिशङ्क्यम् ।

६२१–अत्र वाक्ये शिव आपिक्रियायाः कर्ता । तस्यैकत्वाद् गृहस्य कर्मणोऽप्येकत्वमर्थादापन्नं भवति । महामहिम्नस्तस्य गृहबहुत्वे संभवत्यपि निजशब्दस्य द्विरुक्तिर्न घटामञ्चति । शिवश्च तत्सहचरिता देवाश्च निजनिजगृहानापुरिति विवक्षति । परं नायमर्थो यथास्थितेन न्यासेनार्प्यते । सहार्थेन युक्ते तृतीययोक्तानां देवानां कर्मण्यनन्वयः कर्तुरीप्सिततमत्वात्कर्मणः । तस्माद् दुष्टमिमं न्यासं निरस्य शिवः सर्वे देवाश्च निजनिजगृहानापुर्मखत इति निर्दुष्टं वाक्यस्वरूपं परिग्राह्यम् ।

६२२–अत्र प्रवृत्ते वाद इति भावलक्षणया सप्तम्या वासरसप्तकस्य प्रयाणं लक्ष्यते, वादप्रवृत्तिश्च लक्षिका । अयमर्थः—यदाऽऽवयोर्वादः प्रावृतत्तदा सप्त वासराः प्रयाता आसन् । वासरसप्तकस्यात्ययोभूत् । परं नैष विवक्षितोऽर्थः । कस्य ते सप्त वासराः प्रयाता इत्यनुदितम् । सम्बन्धानुपादानादेवात्रानिष्टार्थप्रसक्तिः । अतः षष्ठ्या सम्बन्धो वक्तव्यः । भावलक्षणा सप्तमी च हातव्या । प्रवृत्तस्यावयोर्वादस्याद्य सप्तवासरा याता इत्येवं वाक्यं च प्रणेतव्यम् ।

६२३—राधामाधवयोर्वियुक्तयोः सन्देशो विभिन्नानां दूतानामाधारेण प्रदत्तो विलोक्यते ।

६२४—पुत्रस्ते मन्त्रद्रष्टरि सत्येव सुगुणामेतां मे सुतामाप्स्यति नान्यथा ।

६२५—परैः प्रवाहिते साहित्यसुधास्रोतसि गाहं गाहं केचित्समतां कथंचिल्लभन्ते ।

६२६—कादम्बरीरसास्वादमत्तः प्रत्येकं सहृदयो जनो न गणयति काव्यान्तररस-पानम् ।

६२७—काव्ये प्राधान्यं वाग्वैदग्ध्यरूपाया वाक्चातुर्या अर्थात् कलापक्षस्यैव वर्तते ।

---

६२३—अत्र विभिन्नानां दूतानामाधारेणेत्यत्र षष्ठी प्रदुष्यति । दूता एवाधारा न तु तत्सम्बद्धः सः । वस्तुत आधारशब्दोऽप्यस्थाने । दूता हि सन्देशहरणे करणमभिप्रेताः, तेन दूतैर्द्वारेति निरवद्यं स्यात् । अन्यत्र सन्देशहर इत्यादिषु दूताः कर्तारोऽभिप्रेयन्त इत्यन्यदेतत् ।

६२४—अत्र पुत्रो मन्त्रद्रष्टृत्वसद्भावरूपायाः क्रियायाः कर्ता सुताप्रातिक्रियायाश्चापीति नायं भावलक्षणायाः सप्तम्या विषयः । यस्य कर्तुर्भावेनान्यस्य भावो लक्ष्यते तत्र सप्तमीति सूत्रकारहृदयम् । तेन वाक्यभेदेन वक्तव्यम्—यदा सुतस्ते मन्त्रद्रष्टा स्यात्तदा मे सुतामाप्नुयात् ।

६२५—सुधास्रोतसि गाहं गाहमित्यत्र णमुल्प्रयोगे नापराध्यति कविः । सुधास्रोतसीत्यत्र सप्तमीप्रयोगे तु मुक्तसंशयमपराद्धः । गाहू विलोडन इत्यस्य सकर्मकत्वे नियतत्वात् । सिंहो वनं गाहते । सलिलमवगाढो मुनिजन इत्यादिषु सकर्मकत्वस्य दर्शनात् ।

६२६—प्रत्येकं सहृदयो जन इत्यत्र वीप्सार्थेऽव्ययीभावस्य प्रत्येकमित्यस्य प्रयोगे सहृदयो जन इत्यत्रैकवचनं दुर्घटम् । दुर्घटता चास्येहैव प्रत्येकशब्द-व्यवहारमधिकृत्य विततमुक्तेति न भूयो वितायते ।

६२७—अत्र वाक्येऽन्तरर्थाद् इत्यस्य प्रयोगो न व्यवहारमनुसरति । अर्थाद् इति वाक्यार्थे पदं प्रयुज्यते । इदमर्थादापद्यत इत्यर्थं च गमयति । तेन वाक्यान्ते शक्यमिदं प्रयोक्तुं न वाक्यमध्ये । पूर्ववाक्यार्थविवरणप्रस्तावक-स्यास्य विवरणवाक्यान्तरोपक्रमात्प्राग्युज्यते प्रयोगः । वस्तुतोऽर्थादित्यवाक्कालः प्रयोगः, पूर्वे प्रशास्त्वत्रार्थेऽयमर्थः, इदमुक्तं भवतीत्येवमात्मकं वाक्यं प्रयुयुजिरे ।

६२८–विज्ञाने कलायां चैष एव मुख्यो भेदः।

६२९–कलाकारः कविरिव स्वस्य विचाराणां व्यक्तये किमपि माध्यममवश्यमङ्गी-कुरुते।

६३०–अर्थसौष्ठवं निकषा शब्दसौष्ठवं नगण्यं गण्यते।

६३१–नासौ न काम्यो न च वेद सम्यग् द्रष्टुं न सा भिन्नरुचिर्हि लोक इत्येषा सूक्तिः स्मृतिपथेऽवतरति।

६३२–स्थायिभावः क्रोधो रौद्ररसे विपरिणमत इति केचित्।

६३३–ददामि सर्वं मनसीप्सितं ते।

---

६२८–अत्र वाक्ये सप्तमी दुष्यति। भेदो नाम षष्ठ्योच्यते इति व्यवहारः। तथा च मालविकायां कालिदासस्य प्रयोगः—तव च मम च समुद्रपल्वलयो-रिवान्तरम्। आदिकवेः कृतावपि (३।४७।४५) यदन्तरं स्यन्दनिका-समुद्रयोः।.....तदन्तरं दाशरथेस्तवैव चेत्यादावनेकस्मिन्प्रयोगे भेदिका षष्ठ्येव दृश्यते।

६२९–माध्यमम् इति सम्प्रति प्रचरति लोके। लोकश्च करणे साधने द्वारि वार्थेऽस्य प्रयोगमिच्छति। साहित्ये तु विरलोऽस्य प्रयोगः। तत्रापि ऋग्वेदीयमध्यम-मण्डलर्षयो माध्यमा उच्यन्ते। मध्यमाच्छैषेऽण्। तेन विवेकिभिर्वाक्साधु-त्वमाद्रियमाणैर्माध्यमशब्दो दूरतस्त्याज्यः।

६३०–अर्थसौष्ठवं निकषेति सर्वथाऽसंस्कृतं संस्कृतवदाभासते। प्रचरन्त्या लोकभाषाया अनुकृतिरेषा भवति। अर्थसौष्ठवं शब्दसौष्ठवात्सुदूरेण प्रकृष्यते (अतिरिच्यत इति वा) इत्येवं वचनीयम्।

६३१–इत्येषा सूक्तिः स्मृतिपथमवतरतीत्येवं वक्तव्यम्। अवतरतेः सकर्मकत्वात्। अवतीर्णा यामिनीत्यत्र तु गत्यर्थत्वात्कर्तरि क्तो द्रष्टव्यः

६३२–रौद्ररसे विपरिणमत इत्यत्र सप्तमी व्यवहारं नानुपतति। पयो दधिभावेन परिणमत इति प्रसिध्यति वाग्योगविदां प्रयोगः। तृतीययैवायमर्थः शक्यो वक्तुं न सप्तम्या। रौद्ररसस्याधिकरणता न शक्या कल्पयितुम्। अधि-करणतायामुपेतायां महाननर्थ उपनमेत्। क्रोधः कर्ता, तदाश्रयो विपरि-णामो रौद्ररसमाश्रयेत्। हन्त सर्वमाकुलं स्यात्। तेन रौद्ररसभावेनेति वक्तव्यम्।

६३३–मनसीप्सितमिति दुष्यति। मनो हीप्सतेः करणमिष्यते। तस्मान्मनसेप्सित-मिति वक्तव्यम्।

६३४–शताभिधानानि रवेरिमानि नित्यं स्मरेद् भूतिकामः ।

६३५–एकत्र देशे खट्वावानं प्राधीयतेऽन्यत्र च पद्यरचनेति तत्र सहजायाः शक्ते-र्भेदो रुचिभेदश्च कारणम् ।

६३६–योऽर्थः पुरुषेणैकेन न साध्यः स पुरुषग्रामेण सहेलं साध्यो भवति ।

६३७–तात्कालिकीमरुचिं वैरस्यं वाऽपाकर्तुं हास्यस्यावलम्बनं गृह्यते ।

६३८–प्रागैतिहासिकात्कालादद्य यावत् सुधामयी संस्कृतसाहित्यधाराऽविच्छिन्नं प्रवहति ।

---

६३४–शताभिधानानि शतं नामानीत्यनर्थान्तरम् । शतमभिधानानीत्येवं व्यासेन वक्तव्यम् । दिक्सङ्ख्ये संज्ञायाम् ( २।१।५० ) इति पाणिनीयशासनेन समानाधिकरणे दिक्संख्ये संज्ञायामेव समस्येते नाऽसंज्ञायाम् । यथा सप्तर्षय इत्यत्र । यथा वा पञ्चाम्रा इत्यत्र । अत्र सामानाधिकरण्यमस्ति, संज्ञा नास्तीति समासो दुर्लभः ।

६३५–अत्र प्राधीयत इति दुष्यति । अध्ययनं शब्दक्रियं शब्दकर्मकं च भवतीति व्यवहारनैयत्यम् । वानं वा पद्यरचना वा गृह्यते शिक्ष्यते न त्वधीयते । वेदोऽधीयते स्मृतयश्चाधीयन्ते । किं च । प्रशब्दोऽप्यस्थाने । अधीङः पूर्वं प्रयुक्तः प्रशब्द आदिकर्मणि वर्तते, प्राधीत इत्यत्र यथा । अध्येतु-मारब्धः प्राधीतः, अधीतिप्रतियोगी ।

६३६–पुरुषग्राम इत्येतद् व्यवहारो न समर्थयते । समूहवचनोऽपि ग्रामशब्द इन्द्रियग्रामः, गुणग्राम इत्यादिष्वेव दृश्यते, न तु यत्र तत्रासंकोचम् । समासान्तः सन्नेव च समूहार्थेऽवतरति प्रयोगम् । न स्वतन्त्रा प्रकृतिः । इदं शब्दस्वाभाव्यम् ।

६३७–हास्यस्यावलम्बनं गृह्यत इति दुष्टो न्यासः । हास्यमवलम्बनं गृह्यते । हास्यमेवावलम्बनं न तु तत्सम्बन्धि किञ्चित् ।

६३८–किमिदं प्रागैतिहासिकात् कालात् इति । इदमपार्थकं पदकदम्बकम् । ऐतिहासिको हीतिहासज्ञमाह यथा पौराणिक इति पुराणपाठिनं पुराणज्ञम् । प्रागिति पूर्वस्मिन्कालेऽर्थे सप्तम्यर्थवृत्ति । ततः पूर्वस्मिन्काले भवः कश्चिदै-तिहासिकः, तत इत्यर्थः स्यात् । एवमपि नैतत् कालं विशिंष्यात् । वक्तुश्च नैषा विवक्षा । आञ्जल्या वाचोऽनुचिकीर्षयैकपदनिर्मित्सा भ्रंशयति वक्तारं वाक्सरण्याः । परं नहि तद्धिताः सन्तीति ते यतस्ततः प्रकृतेः समुत्पाद्याः, नूतनशब्दनिर्मित्साकण्डूया च स्वस्य विनेया । तस्मात्सन्दर्भशुद्धिमभी-प्सता परत्र बोधसङ्क्रान्तये दुर्लभेतिहासाच्चिरातीतात् कालादित्येवं वक्त-व्यम् । एकपद्यलाभाय तद्धितवृत्तौ नातीवाभिनिवेष्टव्यम् ।

६३९–आचार्यशुक्लेन चिन्तामणौ साधारणीकरणविषये काश्चन मान्यता उपस्थापिताः, ताश्चिन्त्यन्ते ।

६४०–स एकतोऽभिनवगुप्तविश्वनाथाद्याचार्येण प्रभावितो लक्ष्यते द्वितीयतश्च पाश्चात्यैरालोचकैः शेण्डप्रभृतिभिः ।

६४१–अत्र किमपि नूतनमुदाहरणं प्रस्तौमि, तद् विचार्यताम् ।

६४२–विमर्शकास्तु तस्याचार्यकथनस्यैतत्तात्पर्यं निःसारयन्ति ।

६४३–शक्यं नाम सुधीभिरिममर्थं पूर्णतः प्रत्याययितुम् ।

६४४–क्रियेयं पाठकदर्शककविश्रोतॄणां हृदयेषु समुद्भवति ।

---

६३९–काश्चन मान्यता इति हिन्द्या अनुकरणम् । मान्यतेति शब्दो नात्रार्थे क्वचित्प्रयुक्तचरो दृष्टः । मतानीति प्रयोक्तव्यम् ।

६४०–अत्र वाक्येऽभिनवगुप्तविश्वनाथाद्याचार्येणेत्यत्रैकवचनं दुष्यति । अभिनवगुप्तविश्वनाथौ आदी येषां तेऽभिनवगुप्तविश्वनाथाद्याचार्या इति बहुवचनमेव युक्तरूपं स्यात् । एकवचनं केनाभिप्रायेण प्रयुक्तमिति नार्हामोऽभ्यूहितुम् । द्वितीयत इत्यप्यव्यवहृतम् । अत्रार्थेऽपरत इत्येव प्रयुञ्जते प्रयोगकुशलाः ।

६४१–प्रस्तौमीत्युपस्थापयामीति विवक्षति । प्रपूर्वः ष्टुञ् स्तुताविति प्रारम्भे वर्तते । अतः प्रस्तावोऽधिकारः प्रारम्भो भवति ।

६४२–तात्पर्यं निःसारयन्तीति वाक्यैकदेशो दुष्यति, व्यवहाराननुगमात् । तात्पर्यमुन्नयन्ति, गृह्णन्ति, बुध्यन्त इति वा व्यवहारानुगतं स्यात् ।

६४३–पूर्णत इत्यत्रार्थेऽप्रयुक्तपूर्वः प्रयोगः । पूर्वे सूरय इममर्थमत्यन्तमिति शब्देन बलवद् इति शब्देन वाऽऽचचक्षिरे । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत इति ( शाकुन्तले ) ।

६४४–अत्र पाठकदर्शककविश्रोतॄणामिति द्वन्द्वे पूर्वनिपातनियमानादरो दोषः । कविश्रोतृपाठकदर्शकानामित्येवं न्यासो निर्दुष्टः स्यात् । तत्रापि पाठकशब्दमपोद्धृत्य पठकशब्दो न्यास्यः । पाठक इत्यध्यापको भवति, पठकश्चाध्यायकः । तथा च भारते वनपर्वणि ( ३१३।१० ) प्रयोगः—पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः ॥ इति ।

६४५–साधारणीकरणे च मानवस्य सामाजिकी सहानुभूतिपूर्णा सौन्दर्योपासिका प्रकृतिः कारणम् ।

६४६–प्रत्येकं ललितकलानां सरसं भवतीति व्यवसितम् ।

६४७–कश्चिदैतिहासिकोऽमरसिंहभामहदण्डिनामग्निपुराणात् पूर्ववर्तित्वं प्रतिजानीते, अपरस्तु परवर्तित्वम् ।

६४८–इत्यन्तःप्रेरणाऽस्या निबन्धरचनायाः श्रेयोविशेषं भजते ।

---

६४५–समाजं रक्षति तत्समवेतः सन्निति सामाजिक उच्यते । सदस्य इत्यपरपर्यायः । प्रयोगदिदृक्षया रङ्गे कृतसन्निधानो जनोऽपि सामाजिकशब्देनाभिलप्यते—तेन हि तत्प्रयोगादेवात्रभवतः सामाजिकानुपास्महे इति मालत्याम् । देवि ! सामाजिका भवाम इति मालविकायाम् । समाजस्येदमिति शैषिके ठकि प्रयोगो नितान्तदुर्लभः । सहानुभूतिरिति समस्तं पदमपि साहित्ये दुर्लभम् । लब्धं चेत्स्यात्सहचरितं संवेदनमेव ब्रूयात् न केन सहचरितं किंलक्षणं च तदिति विशिष्य न निर्ब्रूयात् । योऽत्र वक्तुर्विवक्षितोऽर्थः स व्यवहारे समादृतेन जनेनेत्थम्भूतेन न्यासेन शक्योऽर्पयितुमात्मा च श्रेयसा योक्तुम्—साधारणीकरणस्य च मानवस्य नैसर्गिकी सामाजिकता स्वेतरसमानानुभूतिः सौन्दर्योपासकता च कारणम् इति ।

६४६–ललितकलाः प्रत्येकं सरसा भवन्तीत्येवं वक्तव्यम् षष्ठ्या नार्थः । ललितकलाः कर्त्र्यः । प्रत्येकमिति वीप्सायामव्ययीभावः । क्रियाविशेषणं चैतत् । अत्र बहुतरकं पूर्वत्र व्याहृतम् ।

६४७–अत्र दण्डिभामहामरसिंहानाम् इत्येवं द्वन्द्वे पूर्वनिपातनियमानुरोधेन वक्तव्यम् । कस्य पौर्वकाल्यं कस्य चौत्तरकाल्यमिति व्यवसाय नानुपूर्वी निर्णेया । यस्मात्तद्गमिकाऽऽनुपूर्वी समासेन न शक्या गमयितुम् । पूर्ववर्तित्वं अपरवर्तित्वमिति पदे अतिहाय पूर्वकालतामपरकालताम् इतीमे प्रयोक्तव्ये ।

६४८–श्रेय इति प्रशस्यतरं भवति विशेषणं चेत् । श्रेयः कल्याणं भवति विशेष्यं चेत् । प्रकृते कल्याणार्थायोगादस्थाने श्रेयः शब्दप्रयोगः । इत्यन्तःप्रेरणेमां निबन्धरचनां विशिष्य प्रयोजयति, अस्या निबन्धरचनायाः प्रधानं प्रयोजकं (प्रमुखं निबन्धनम्) इत्येवं वा वक्तव्यम् ।

६४९–इति पृष्टाऽगजा तेन प्रैरिरद् विजयासखीम् ।
सा चाह शृणु भो विप्र गिरिराजसुता ह्यसौ ॥

६५०–प्रकुप्य विविधाः शक्तीः पार्वती समसर्जयत् ।

६५१–शिला च सा । खेरीमठेषु तद्वार्ता-स्मृतिमद्यापि यच्छति (राजत० १।२७५)।

६५२–अवतमसभिदायै भास्वताभ्युद्गतेन ( शिशु० ११।५७ ) ।

६५३–जातः कमलदेव्या यः श्रीमाञ्शक्र इवादितेः ( राजत० ४।३७२ ) ।

६५४–राज्याभिषेकं संभूय तत्रत्या ब्राह्मणा ददुः ( राजत० १।३८५ ) ।

६५५–अमुना सस्यपालेन कान्दिशीकाः कृता वयम् ( राजत० १।२३३ ) ।

---

६४९–अगजा (पार्वती) तेन शिवेन पृष्टा विजयां सखीं प्रैरिरद् इत्येवं वक्तव्यम् । यथा शिंशपा वृक्ष इत्यत्र समासो न भवति तथात्रापि नेष्यते । कस्मान्नेष्यत इति चेदुच्यते । यत्रोभे समानाधिकरणे पदे विशेषणं विशेष्यं च भवतस्तत्रैव विशेषणं विशेष्येण बहुलमित्यनेन समासो भवतीत्येतदभिप्रायकं सूत्रे बहुलग्रहणं करोति । शिंशपात्वं वृक्षत्वं न व्यभिचरति, नहि वृक्षत्वव्यतिरिक्तं शिंशपात्वं नाम किंचिदस्ति । तेन शिंशपा विशेषणं न । वृक्षत्वं तु शिंशपात्वं व्यभिचरत्येव, शिंशपाया व्यतिरिक्ता अपि वृक्षा उपलभ्यन्ते यतः, तेन वृक्षो विशेषणम् । उभयोः शिंशपावृक्षयोर्विशेषण-विशेष्योभयरूपता नास्तीति समासस्याविषयः । एवं प्रकृतेपि योज्यम् ।

६५०–समसर्जयदित्यपोह्य असृजदिति सृजेरनुपसृष्टस्य प्रयोग आस्थेयः । सम्पूर्वः सृजिः संगमने सम्पर्चने रूढ इति नाविदितं विदाम् ।

६५१–अन्यत्र राजतरङ्गिण्याः स्मृतिं यच्छतीति व्यवहारस्यानुपलम्भः, तेन नासमभ्युपेयो भवति । तद्वार्तामद्यापि स्मारयतीत्येव व्यवहारानुगम् ।

६५२–कविनाऽवतमसमित्यस्थाने प्रयुक्तम् । क्षीणेऽवतमसं तम इत्यमरः पठति । कविरस्यामरवचनस्यानभिज्ञ इति नावकल्प्यम् । स्खलनधर्माणो मनुष्या इत्येव शक्यं वक्तुम् । विशेषानादरेण सामान्यमेव ग्राह्यमिति मल्लिनाथः । परं विशेषानादरः कस्मादिति पृच्छा दुष्प्रतिवचा ।

६५३–कमलदेव्यां जात इत्येव परम्परीणो व्यवहारः, तमतिक्रामति प्रचरद्भाषा-मनुक्कुर्वन्कविः ।

६५४–राज्याभिषेकं ददुरित्यप्यागन्तुकोऽसाम्प्रदायिको वाग्व्यवहारः । संस्कृते वाङ्मये नैकत्राप्येष समाश्रितः पूर्वैः सूरिभिरिति नायमादृत्यः । राज्ये ( राज्येन वा ) कश्चित्तदर्होऽभिषिच्यते तादृशं तमभिषिञ्चन्ति वेत्येव संस्कृते भाषितभङ्गी । न चाभिषेकस्तिलको भवति यः प्रदीयेत । राजीकरणे तिलकक्रियाप्यन्तर्भवतीत्यन्यदेतत् ।

६५५–कान्दिशीकशब्दप्रयोगोऽस्थाने । कान्दिशीको भयद्रुत इत्यमरः । अत्र तु कामप्यनिर्वाच्यां दिशं गमिताः विषमस्था इत्यत्रार्थे प्रयोगः । कां दिशं व्रजामीत्याकुल इत्यमरोद्घाटने स्वामी ।

प्रयत्ने ऽकोविदो व्यवहारस्यादर्शभूतो नृपतिरिति वाक्यार्थे आदर्श नृपतिरिति व्यवहरन्ति। कोविदास्तु पूर्वे नृपतीनामादर्श इति व्यवजह्रुः। मृच्छकटिकायां (१।४८) आदर्शः शिक्षितानामिति प्रयोगः। उज्जयिनीस्थमाचार्यचारुदत्तं गोचरयति। प्रतिफलिताः शिक्षितानां गुणा आचार्यचारुदत्ते इति तत्र भवानादर्शभूतः।



# प्रथमोऽनुबन्धः

अवसितायामेतस्यां पुस्तिकायामिदं मे चित्तमुत्पन्नं प्रकीर्णकम्प्रस्तुत्य सन्देह-विभ्रमयोर्विषयभूता अल्प एव प्रयोगाः समुच्चित्य व्याख्याताः। अतथाभूताः शिष्टजुष्टाः साम्प्रतिकानां भूयसाऽविदिता वेदितव्याश्च सन्ति भूयस्य इति तेप्यनुक्रम्य व्याख्यानीया बोधस्य कात्स्न्यार्येति तेत्रानुबध्यन्ते—

द्वन्द्वं रहस्य-मर्यादावचनेत्यादिसूत्रे (८।१।१५) दीक्षित आहान्यत्रापि विषये योगविभागाद्द्वन्द्वमिष्यते। तद् विषयान्तरमुदाहरामः—द्वन्द्वमिन्द्रेण देवताः शस्यन्ते (ऐ० ब्रा० ३।५०, श० ब्रा० १।११।१।२२)। द्वन्द्वं द्विशो द्विवर्गसम्बन्धेन। द्वन्द्वमन्ये युयुत्सवः। प्रक्रीडिताश्च ते द्वन्द्वमुत्पेतुर्युगपत्तदा (हरि० २।१४।१८)। भागवतकारस्तु द्वन्द्वेनेति तृतीयान्तं पठति—एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य च युध्यमानाः (८।१०।३४)।

कोषेष्वपठितोपि कालिकेति शब्दो मेघपङ्क्तिपर्यायः श्रीरामायणे (२।४१।१२) श्रूयते—कालिकाऽनिलवेगेन महोदधिरिवोत्थित इति। रात्रिविषये कालशब्दोपि तत्र स्थितः काली निशेति। तमस्विनीत्यर्थः।

शोकपर्यायसन्तप्तः (रा० २।४१।१५)। शोकेन पर्यायेण क्रमेण सन्तप्त इति तदर्थः। लवस्य प्रणामपर्यायः (उत्तर०)। अनुक्रमेण प्रणामः प्रणाम-पर्यायः। पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः (वे० सं० २।१३)। पर्यायेण कादाचित्कतया।

धारेरुत्तमर्णः (१।४।३५)। अत्र सूत्रे णिच्सहितस्य धृञः प्रयोगादवसीय-तेऽत्र विषये ण्यन्तस्यैव धरतेः प्रयोगं व्यवहारविदो विदुः। अन्यथा मात्रालाघव-मप्यत्याद्रियमाण आचार्योऽतिरिक्ताक्षरं पदं न प्रयुञ्जीत। आतश्च भारतेऽत्र विषये ण्यन्तस्यैव धृञः प्रयोगो दृश्यते—ऋणं धारयमाणस्य कथं सुखमनीहयेति (उ० १०७।६)। अधमर्णपर्यायो धारणकशब्दोप्यस्मदुक्तं समर्थयते।

त्यक्त्वा दुष्टो नष्टः पयोनिधिम् (वि० पु० ५।७।६)। इह नष्टः पलायित इत्यनेन समानार्थः। स च गौणोऽर्थः। मुख्यया वृत्त्या तु नष्ट इति तिरोभूतमाह।

वृद्धोहं मम कार्याणि समस्तानि न गोचरे (वि० पु० १।१७।७३)। गोचरो विषयो भवतीन्द्रियविषयो वा। इह त्वायत्ततामाह। मत्कार्याणि मत्साध्यानि न भवन्तीत्यर्थः। अत्रैवार्थे समासचरमावयवोऽपि गोचरशब्दः श्रूयते यथा दुष्प्रापा

परमा सिद्धिरगस्या कामगोचरैः ( भा० वन० २६१।२४ )। कामगोचरः कामायत्तः कामवक्तव्यः।

सुखोच्चार्यं तु तन्नाम कुर्याद्यत्प्रवणाक्षरम् ( वि० पु० ३।१०।११ )। प्रवणं क्रमनिम्नमुच्यते। इह प्रवणाक्षरं लघ्वक्षरान्तमुच्यते। इदं च शब्दवित्तमो व्यास इत्यस्य निदर्शनम्।

अन्तरशब्दमधिकृत्य किञ्चिदुक्तमधस्तात्। अत्रानुक्तमुपन्यस्यते—भुवः संज्ञान्तरयोः ( पा० ३।२।१७९ )। अत्रान्तरशब्दः प्रतिभूवचनः। भवति च याज्ञवल्क्यस्मृतौ तदर्थे प्रयोगः—अन्तरे च तयोर्यः स्यादिति ( २।२३९ )। क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ( भा० शां० १०।३ )। त्वदन्तरे त्वत्तोऽन्यत्र। क्षमानुकम्पादयः क्षात्रं मार्गमाचरत्सु क्षत्रियेषु न विद्यन्ते त्वय्येव केवलं वर्तन्त इत्याह। तेन तव विरूपकरणे सुकृतमन्तरे धृतम् ( पञ्चत० ४ )। अन्तरे धृतं लग्नकमित्यर्पितम् इत्यर्थः। भार्यापत्योरन्तरं ज्ञातिभेदम् ( भा० उ० ३५।४३ )। अन्तरं वियोगः।

स्वीकारोऽङ्गीकारोऽभ्युपगम इति सर्वस्य विदितं बालस्यापि। इदं तु न विदितं स्वीकारो वशीकारोपि भवति, तद् वेद्यते—द्रव्यमप्यस्य स्वीकरिष्यामि ( यो०सू० २।३३ भा० )। वशे करिष्यामि स्वतां नेष्यामीत्यर्थः। लुब्धमुत्कोचदानेन स्वीचक्रे दण्डनायकम् ( राजत० ७।११५५ )। स्वीचक्रे वशे चकारेत्यर्थः।

तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायत ( शिशु० २।३० ) इत्यादिषूरीकृत्येत्यस्याङ्गीकृत्येत्यर्थः प्रतीतो न प्रत्याय्यः। अस्त्यस्यार्थान्तरं विविदिषाविषयः। एकाकी तावतो वीरानूरीकृत्य स निर्ययौ ( राजत० ८।१४९८ )। ऊरीकृत्य सहादाय। धार्तराष्ट्रादयः पञ्च पाण्डवानूरीकृत्य पञ्चोत्तरं शतं कुरवो भवन्ति। ऊरीकृत्य = अन्तर्भाव्य। मालविकायां ( ५ ) चेत्थम्भूतः प्रयोग एतस्यार्थस्य निदर्शकः—मौद्गल्य ! यज्ञसेनश्यालमूरीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः।

अन्यत्रापि यदा षष्ठी मङ्गलेन भविष्यति ( वामनपु० ४१।२८ )। मङ्गलवासरेणोपलक्षिता षष्ठी तिथिः, मङ्गलवासरः षष्ठी तिथिरिति तादात्म्ये वा प्रकृत्यादित्वात्तृतीया बोध्या। मङ्गलवासरस्याधिकरणत्वाभावेन तत्र सप्तमी न युक्तेति तृतीयाव्यवहारेण सुप्रतिष्ठा प्रयोगसरणी रक्षिता पुराणकारेण।

सरलवृद्धिश्चक्रवृद्धिरित्यादिषु धनिकधारणकयोः संव्यवहारे यो वृद्धेरर्थः स तिङन्तेन वृधिनापि शक्यते वक्तुम्। तथा च ( याज्ञ० २।३९ ) मिताक्षरायां पठ्यते—तस्मिन्नेव वा पुरुषे रेकसेकाभ्यामनेकशः प्रयोगान्तरकरणे सुवर्णादिकं

द्वैगुण्याद्यतिक्रम्य पूर्ववद् वर्धत इति। अधमर्णेन सुवर्णादिप्रयोगनिमित्ता वृद्धिः प्रयोक्त्रे देया भवतीत्यर्थः।

निज आत्मीयो भवतीति न न विदितम्। अहं राष्ट्रस्याभीवर्गे निजो भूयासमुत्तमः (अथर्व० ३।५।२)। अत्रानन्यसहायो निजशब्देनोक्त इति सर्ववेदभाष्यकारः सायणः। अहो साधुरभ्यूह आचार्यस्य। यो निज आत्मीयो भवति सोऽनन्यसाधारणो भवति ततोऽनन्यसहाय इति न दवीयानध्वा।

प्रकारः सादृश्यम् इत्यत्रार्थे प्रसिद्धः। प्रकारे गुणवचनस्य (पा० ८।१।१२)। प्रयोगस्त्वत्रार्थे न सुलभ इति स इह सन्निधाप्यते—दीर्घो हर्षनृपोदन्तः सोऽयं कोऽप्यद्भुतावहः। रामायणस्य नियतं प्रकारो भारतस्य च (राजत० ७।१७२८)। प्रकारः सदृशः। भारते खल्वपि—यूपप्रकारा बहवो वृक्षाश्चेमे विशांपते (वन० ११०।१७)।

धू विधूनन इति तुदादिषु पठ्यते। स केवलो बीजनेपि वर्तत इति विदाङ्कुर्वन्तु सन्तः। तन्मरुतोऽधून्वन् (ऐ० ब्रा० १३।१०)। अथ वा एतेभ्यः प्राणाः क्रामन्ति ये यज्ञे धुवनं तन्वते (श० ब्रा० १३।२।८।५)। अत एव धवित्रमिति व्यजनान्तरमुच्यते। उक्तं चामरेण—धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणेति। धूञः प्रयोगे व्यजनमपि क्वचिच्छ्रूयते करणम्। तद्यथा व्यजनैर्धूयमानोपि तावत् प्रज्वलते न सः (भा० सभा० ३१।२९)।

विन्दतेर्व्यवहारे वधीयताम्! यद्यक्ष्यामयो विन्देत् (श० ब्रा० १३।३।८।४)। अक्षीति द्वितीयान्तम्। यदि नेत्रं रुज्येत, रोगेण ग्रस्येतेत्यर्थः। यस्य जायामार्तवं विन्देत् (श० ब्रा०)। यस्य जायर्तुमती स्यादित्यर्थः।

णिजिर् शौचपोषणयोरित्यस्य प्रायेण निष्पूर्वस्य प्रयोगो भवति, केवलस्यापि काचित्क इति स दृश्यताम्—यथा निक्तस्य (पशोः) लोमानि शीयन्ते (श० ब्रा० १३।२।६।८)। निक्तस्याभिषिक्तस्य आर्द्रीकृतस्य। शीयन्ते पतन्ति।

यौतकं सुदाय इति प्रतीतोर्थः। यौतकमसाधारणं रिक्थमपि भवति। तथा च (मनु० ९।२१४) प्रयोगः—न चादत्त्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम्। भारते खल्वपि—न तत्र संविभज्यन्ते स्वकर्मभिः परस्परम्। यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते (शां० १२।९०)॥

अनन्तरमुत्तरमव्यवहितपूर्वमव्यवहितपरं वा भवतीति प्रसिध्यत्यर्थः। अव्यवहितमात्रे सानुषङ्गेर्थेपि भारतस्थः प्रयोगः—सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्। सुखदुःखावृते लोके नेहास्त्येकमनन्तरम् (शां० १५३।८९)॥ अन्यत्राप्यनन्तरशब्दो व्यवह्रियते—कार्ये चानन्तरोऽभवत् (भा० वन० २८०।७)।

अनन्तरः संलग्नः । अन्तेवासीत्यत्रान्तशब्दः सामीप्यमाह । वाक्येप्यस्यास्मिन्नर्थे प्रयोगो दृश्यते—तस्माज्जायाया अन्ते नाश्नीयात् ( श० ब्रा० १०।५।२।९ ) ।

नाकस्माच्छ्मश्रुलः स्यादित्यादिषु गृह्यवचनेषु कस्मादित्यकारणादित्यस्यापर-पर्यायः । नञ्रहितस्य कस्मादित्यस्य कारणादित्यर्थे प्रयोगो भारते, स आस्वाद्यताम्—अकस्माद्यदि वा कस्माद्वर्तन्ते सात्त्विका गुणाः ( शां० २४०। २३ ) । तत्कस्मादित्यादिषु पृच्छावाक्येषु कस्मादिति साक्षात्कारणं नाह । विशेषणमहिम्ना तु विशेष्यार्थलाभः ।

एकाग्र एकायनगतः समाहित उच्यते, अनेकाग्रश्च तद्विपरीतः । अनैकाग्र्य-मित्यस्य व्यभिचारित्वम् अनैकान्तिकत्वमित्यर्थेपि वृत्तिर्भवति । तथा च भारते ( शां० २६०।१९ ) प्रयोगः—आचाराणामनैकाग्र्यं सर्वेषामुपकल्पयेत् ।

वृङ् संभक्ताविल्यस्य संभक्तेरन्यत्रापि प्रयोगो भारते—परान्वृणीते स्वान्द्वेष्टि तं गौस्त्यजति भारत ( उ० १२४।२८ ) । परान् वृणीते परेषु प्रीयते प्रीति-मान्भवतीत्यर्थः ।

यथेदानीमित्यस्य कालिदासे ( शा० ४ ) क इदानीमुष्णोदकेन नवमालिकां सिञ्चतीत्यत्र वाक्यालङ्कारे प्रयोगस्तथा सम्प्रतिशब्दस्यापि शतपथे—न ह्ययुक्तेन मनसा किंचन सम्प्रति शक्नोति कर्तुम् ( ६।३।१।१४ ) ।

उपमावाचकस्य इवशब्दस्य सम्प्रत्यर्थेऽप्युपलभ्यते व्यवहारः । इहेव निधेहीति ( नि० ७।३१।१ ) । स मृत्युमाप्नोतीत्यर्थे तं मृत्युरागच्छतीत्यपि व्यवहारानुगं भवतीति वक्ष्यमाणाच्छतपथप्रयोगादवस्यामः—नैनं पुरा कालान्मृत्युरागच्छति ( १४।५।१।१२ ) ।

निर्मोकशब्दः सर्वस्य विदितो मोकस्तु कस्यचित् । भिद्यते हि मोको निर्मोकात् । मोकोऽजिनं भवति । तथा च भारते प्रयोगः—कदलीमृगमोकानि ( सभा० ४९।१९ ) । कदलीमृगा मृगविशेषास्तेषां मोकानि अजिनानीति भारत-भावदीपः ।

कृते इति सुबन्तप्रतिरूपकमव्ययं कारणात् तदर्थमित्येतयोरर्थयोः प्रथते । कृतेनेति तृतीयान्तमपि तत्र प्रयोगमवतरद् दृष्टम्—मत्कृतेन हि तावद्य सन्तापं परमेष्यतः ( भा० वन० २९७।९५ ) । ब्राह्मणोसीति पूज्यो मे विश्वामित्रकृतेन च ( रा० १।७६।१ ) । मर्षयामि च तत्सर्वं दुर्योधनकृतेन वै ( भा० उ० १६८।१२ ) ।

प्रतिपूर्वः श्रृणोतिरङ्गीकारे प्रसिद्धः । विप्राय गां प्रतिश्रृणोति । दास्यामीति प्रतिजानीते । दानाद्यविषये प्रतिज्ञाने सङ्गरेपि दृश्यते—न मे स्वर्गो बहुमतः

संमानश्च सुरर्षभैः। त्वया राम विहीनस्य सत्यं प्रतिश्रृणोमि ते ( रा० ६।११९।१३ )॥

ग्रहशब्दो हि नानार्थः। सूर्यादिषु नवसु प्रसिध्यतितमाम्। परं ग्रहोतिथिरपि भवति। तथा च भारते प्रयोगः—यथा सिद्धस्य चान्नस्य ग्रहायाग्रं प्रदीयते ( अनु० १००।६ )।

यत्राद्यत्वे प्रायेण समासोत्तरपदेन तृतीयान्तेन रूपशब्देनार्थोऽर्प्यते तत्र द्वितीयां पुरा प्रयुञ्जते प्राञ्चः। तद्यथा—इमाँल्लोकानुखामपश्यन् ( श० ब्रा० ६।३।३।१५ ) उखारूपेणेत्यर्थः। स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतः ( भा० वन० २९५। १२ ) इत्यादि बहुलो व्यवहारो भारतादिषु, सोऽनुसर्तव्यः।

दोषारोपणे दोषेण वा योजनेर्थे खल्वेषा भाषितभङ्गी विलोक्यते प्राक्तनी—यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति ( भा० आदि० २०३।१५ )। दोषेण युक्तं जानातीत्यर्थः। गत्यर्था ज्ञानार्थकाः। नायमर्थः स्वकपोलकल्पितो न वा क्लिष्टकल्पितः। गमिर्ज्ञानार्थ एवात्र प्रयुक्त इत्यत्रैव पूर्वार्द्धे—न चापि दोषेण तथा लोको सन्येतपुरोचनम्। इति मन्यतेः प्रयोगो मानम्। अर्थैक्ये धातुद्वयप्रयोगः। दोषतः कं गमिष्यामि ( भा० आदि० १०८।१ )। दोषत इत्यत्र तृतीयान्तात् तसिः। य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः। न स कालं न वा देवानेनसा गन्तुमर्हति ॥ उक्तोऽर्थः।

वस निवास इति धातो विरमणेऽर्थे रुचिरः प्रयोगो भारते—निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ( उ० ३३।२४ )। न मध्ये विरमतीत्याह।

स्यन्दू स्रवण इति स्यन्दनशब्दे श्रूयते धातुः। स्यन्दते याति स्यन्दन इति स्वामी। अत्रार्थे बाढमास्वादनीयः प्रयोगस्तिङि शतपथे—स होवाच सङ्ग्रहीतर्युङ्ग्धि मे, स्यन्त्स्यामि ( ११।८।४।२ )। स्यन्दनारूढो यास्यामीत्याह।

उत्तमशब्द इष्टविषयं परं महिमानमाचष्ट इति पुरुषोत्तमादिषु शब्देषु प्रत्यक्तम्। अनिष्टविषयमपि तमाहेति व्यक्तयामः—प्राप्तोस्म्यापदमुत्तमाम् ( हरि० २।१२६।८४ )। अतिमहतीं विपदं गतोस्मीत्याह। अन्त्योऽप्युत्तमो भवति। होता प्रथमो भक्षयति यजमान उत्तमः ( आप० श्रौ० ८।१।३।१५ )। आचार्यः खल्वप्याह—उत्तमैकाभ्यां च ( ५।४।९० )। उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दमाचष्ट इति तत्र वृत्तिः।

स्थितो निवृत्तगतिरित्यनर्थान्तरम्। स्थितः स्थितामुच्चलितः प्रयाताम् ( रघु० २।६ ) इत्यत्र यथा। विरतः समाप्तोऽवसित इत्यत्रार्थेपि प्रयोगमवतरन्दष्टः—स्थितः शक्रमहस्तात श्रीमान् गिरिमहस्तथा ( हरि० २।१७।११ )।

जक्ष भक्षणहसनयोरित्यदादिषु पठ्यते। भक्षणेऽर्थे प्रसिध्यन्ति प्रयोगाः, हसनेपि समुपलभ्यते शतपथस्थः—उतेव स्त्रीभिः सह मोदमानो जक्षद्वुतेवापि भयानि पश्यन् ( १४।७।१।१४ )।

स्वृ शब्दोपतापयो र्भौवादिकः। स्वरति ध्वनतीति स्वरोऽकारादिः। संशब्दन आह्वानेपि वर्तत इति वेद्यन्ते विविदिषवः। तद्यथा—इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ( अथर्व० २०।९।२ )। प्रियमेधा मनुष्या इन्द्रं स्तोमैराह्वयन्नित्यर्थः।

श्वि गतिवृद्ध्यो र्भूवादिषु पठितः। वृद्ध्यर्थस्तावदुदश्विच्छब्दे श्वयथुशब्दे च स्पष्टमुपलभ्यते। तिङन्तस्यास्य क्व प्रयोग इत्यनुयोगः। शतपथे स स्थित इति ब्रूमः—पशुरालब्धः संज्ञप्तोऽश्वयत् तमेताभिराप्रीभिरप्रीणात् ( ११।८।३।५ )। अश्वयत् शून उच्छूनोऽभवदित्यर्थः।

गत्यर्थकस्य पते र्भारतस्थोऽयं प्रयोगः किमपि संवननं हृदयस्य—अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे ( शां० १७५।९ )। पतन्ति अतियान्ति।

टुनदि समृद्धाविति भूवादिः। नन्दति प्रसीदतीत्यत्रार्थे तु प्रचुरं प्रयुज्यते। मुख्ये समृद्ध्यर्थे प्रयोगोऽवदानमालायाम्—अधर्म्यमेवं बलिमुद्धरन्नृपः क्षिणोति देशं न च तेन नन्दति ( जा० २३।७० )। न नन्दति न समृध्यति न समृद्धिमान्भवति न स्फीतो भवतीत्यर्थः।

वह गतिप्रापणयोः पठितः। प्रसिध्यन्ति च प्रयोगास्तयोरर्थयोः। अप्रतिबन्धेन प्रवृत्तावपि वर्तते इति तन्त्राख्यायिकागतः प्रयोगोऽयं रस्यताम्—न शस्त्रं वहतेऽश्मनि( १।१३।१६० )। ( भुवि ) हलस्य कर्षणेपि वर्तते—अन्यदा किल धर्मज्ञा सुरभिः सुखसम्मता। वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ( रा० २।७४।१५ )।

ददातिर्दानार्थे विश्रुयते। व्याहरणेऽपि श्रूयते। मानुषीं वाचं ददाति ( तन्त्रा० २।५ )।

अर्ह पूजायाम् भूवादिश्च चुरादिश्च। तत्रार्हत्ययं कृतघ्न उपद्रवस्य ( माल० )। स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा (मनु०३।३) इत्युदाहरणे। मूल्ययोग्यतायामपि शातपथी श्रुतिः—तस्मात्सीसं हिरण्यरूपं सन्न किंचन नार्हति ( ५।४।१।१० )। नास्य कियानप्यर्घो भवतीत्यर्थः।

संज्ञाकरणे दशम्यामुत्थाय पिता नाम करोतीत्यादिषु गृह्योक्तेषु करोतेः प्रयोगः प्रथते। क्वचिद् धाञोपि स दृश्यते यथा धेह्येव मे नामेति (श०ब्रा० ६।१।३।९) इत्यत्र।

आखेटार्थं गमने व्यवहारत्रैविध्यं दृश्यते। तदेतदुदाहरणैर्व्यक्तिं नीयते। अथ स नृपतिराखेटं जगाम। स चचार सहामात्यो मृगयां गहने वने ( भा० आदि० १७५।५ )। चरन्तो मृगयां हृष्टाः (रा० ३।४३।५)। मृगयां चरन्तो मृगयार्थं पर्यटन्त इत्यर्थः। सविषं काण्डमादाय मृगयामास वै मृगम् ( भा० अनु० ५।३ )।

सृज विसर्गे इत्यस्य समुत्पादने प्रेषणे क्षेपणे (अस्त्रादीनां मोचने) प्रथन्ते प्रयोगाः। प्रेरणायां प्रवर्तनायां चोदनायामपि विलोक्यते सृजिः—बुद्धिं द्रव्येषु सृजन्ति विविधेषु परावराम् ( भा० वन० १०१।२२ )।

अन्तःपूर्वस्येणो व्यवधानेऽर्थे सकर्मकत्वेन प्रयोगः शतपथे राजते। तत्राव-धेयं व्यवहारे वैशारदीं विवित्सुभिः। संवत्सरात् सपत्नानन्तरायन् (१।५।३।४)। अन्तरायन् व्यवादधुः। इदं वै मा सोमादन्तर्यन्ति ( श० ब्रा० ३।६।३।७ )। उक्तोऽर्थः।

अत्रापि व्यवहारेऽनधीयताम्। तं तथा नृपशार्दूलं तप्यमानं महत्तपः। शङ्करः परमप्रीत्या दर्शयामास भारत ( भा० आदि० २२३।४० )। तच्छन्दा-नुवर्तितया स्वयमेव स्वस्य दर्शनं तस्मै प्रायच्छदित्यर्थः। अत्रात्मानम् इति नोक्तम्। तस्यावचनमेव व्यवहारानुरोधि, वचनं तु तद्विरोधि। एषा वाक्सरणिरे-तस्यार्थस्य प्रवेदने प्रतितिष्ठतीति विज्ञेयम्। अन्यत्रापि भारत इत्थम्भूतः प्रयोगः—स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति सोऽब्रवीत् ( आदि० ६३।८५ )।

इत्युक्त्वा धर्मराजाय प्रेषयामास वै तदा ( भा० आश्रम० ८।१० )। अत्र दूतमिति नोक्तम्। अनुक्तिरेव व्यवहारानुगा। प्राहिणोद् विदुराय वै ( भा० सभा० ४९।५० )। इत्यत्रापि तथा। एतस्याः शैल्याः प्रचरद्भाषयाऽपि हिन्द्या संवादो लक्ष्यत आश्चर्यः।

शुध शौच इति दिवादेरयमपि प्रयोगः प्रयोगशुद्धयेऽवगन्तव्यः—नहि मे शुध्यते ( = शुध्यति ) भावः कदाचिद् विनशेदपि ( भा० वन० ६०।१८ )। एतदाचक्ष्व मे शीघ्रं नहि शुध्यति मे मनः ( भा० वन० १३७।५ )। नहि मे शुध्यते भावस्तं वीरं प्रति शोभने ( आदि० १२९।९ )। शुध्यति भावः—विशदो भवति शङ्कापेतो भवति, निर्वृणोति।

प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यत इति दर्पणकारः। ततोऽन्यत्राप्यु-पलभ्यते प्रयोगः, सोऽयमीक्ष्यताम्—कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये। मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः (भा० सभा० २०।३) ॥ वशे करिष्याम इत्यर्थः।

द्रा कुत्सायां गताविति धातुर्निपूर्वः स्वापे संवेशे प्रसिद्धः, परं यदि निद्रायात्कामं स्वप्याद् (श० ब्रा० ३।१।३।११) इत्यत्र निद्रा प्रमीलामाह । निद्रायात् प्रमीलितः प्रचलायितः स्यात् । मलवद्वाससा न संवदेत (तै० सं० २।५।१।५)

अर्ते ऋच्छतेर्वा ण्यन्तस्याण्यन्तस्य वा प्रयोगे सविशेषमवधेयं व्यवहारे कोविदैर्बुभूषुभिः । ऋ गतौ, ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेष्विति धातू । इयं वै तं निरर्पयति यो निर्ऋच्छति (श० ब्रा० ७।२।१।११) । योऽपराध्यति परस्मै परं वा क्षिणोति तमियं दुःखेन युनक्तीत्याह । ततस्त्वमर्षी क्रोधसन्दीप्तनेत्रो वातात्मजः पाणिना पाणिमार्च्छत् (भा० कर्ण० ८९।३६) । आर्च्छत् अताडयत् । पाञ्चाल्यं त्रिभिरानर्च्छत्सात्यकिं नवभिः शरैः (भा० भीष्म० ४७।३१) । आनर्च्छत् = आर्च्छत् = अविध्यत् । अर्जुनः पञ्चविंशत्या भीष्ममार्च्छच्छितैः शरैः (भा० भीष्म० ५२।४८) । उक्तपूर्व एवार्थः । बहुधा भीष्ममानर्च्छुं मार्गणैः क्षतमार्गणैः (भा० भीष्म० ११८।४८) ।

केवलोऽण्यन्त ऋच्छतिः समासत्तौ समासने वाऽपि वर्तते—राज्ञश्चान्यान्रणे शूरान्बहूनार्च्छद् धनञ्जयः (भा० भीष्म० ७२।२) । स्थाणुं वर्च्छति गर्तं वा पात्यते (का० सर्वानु०) इत्यत्र स्थाणुना प्रतिहन्यत इत्यर्थ इति ऋच्छतिः प्रतिघाते वर्तते । भारतेपि तत्रार्थे प्रयोगः—प्रमत्तः स्थाणुमृच्छति (सभा० ६५।१९) । ण्यन्तस्तु प्रायेण व्यधने वर्तते । बहुलं चात्रोदाहरणम् । मा ते मर्म विसृग्वरि मा ते हृदयमर्पिपम् (अथर्व० १२।१।३५) । मा अर्पिपम् माऽपिपीडम्, मा व्यात्सम् । द्रोणं प्रष्व्या महाराज बाह्वोरुरसि चार्पयत् । स विद्धो व्यथितश्चैव (भा० भीष्म० १०१।४६–४७) । व्यक्तमिहार्पयद् अविध्यदित्यनर्थान्तरम् उत्तरार्द्धे विद्ध इत्युक्तेः । वार्ष्णेयं समरे क्रुद्धो नाराचेन समार्पयत् । शैनेयं स तु निर्भिद्य (भा० भीष्म० १०१।४९–४९) । इहापि समार्पयदिति निरभिनदित्यनेन समानार्थम् । अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् (भा० भीष्म० ७८।२१) । अत्र समाचिनोदिति पाठान्तरम् । नैतावता समाचयनमाच्छादनमर्थः शक्यः कल्पयितुम् । अन्यत्र सर्वत्र व्यधनार्थस्यासन्देहं प्रतीतेः । पितामहस्त्रिभिर्बाणै र्बाह्वोरुरसि चार्पयत् (भा० भीष्म० १०३।८) । आच्छादनमर्थस्तु नोपपद्यते । न हि त्रिभिर्बाणैराच्छादनं शक्यक्रियं भवति । अनन्तरपरस्मिन्पद्ये शिखण्डी पञ्चविंशत्या भीष्मं विव्याध सायकैरित्यत्र विव्याधेति क्रियायाः श्रवणादत्रापि व्यधनार्थ एवोचितोऽसंशयम् ।

शाम्यतिः शमे प्रसिद्धः सन्धावपि वर्तते तद्यथा—महद् वो भयमागामि न चेच्छाम्यथ पाण्डवैः (भा० उ० ५८।२७) । न शाम्यथ = न सन्धत्थ ।

अवि रवि लवि शब्दे । लवि अवस्रंसने चेति धातुपाठः । लम्बेः प्रयोगनानात्वमुदाहरामः, अवधानं च तत्र दीयमानमिच्छामः । यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा । स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते (भा० आदि० ७९।२)॥ रश्मिषु लम्बते प्रग्रहान्धारयति। जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः (भा० द्रोण० १४१।२१)। लम्बते पश्चिमाशामालम्बते । शूरबाहुषु लोकोयं लम्बते पुत्रवत्सदा ( भा० शां० ९८।१७ ) । लम्बते श्रयते, तत्राधृतो भवति ।

प्राप्त्यर्थो लभिः । तत्रोदाहरणं नापेक्ष्यम् । शकेरर्थेपि प्रयोगमवतरति—कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन् । लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ( भा० उ० ३।५ ) ॥ लभते शक्नोति उत्सहते ।

श्रद्दधातेः प्रयोगे कारकनानात्वं द्रष्टव्यं भवति । श्रदस्मै धत्त स जनास इन्द्रः (ऋ० २।१२।५) । अश्रद् दधत् परलोकाय मूढः ( भा० उ० २७।९ ) । स एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम ( श० ब्रा० १।३।१।२७ ) । कः श्रद्धास्यति भूतार्थम् ( मृच्छक० ३।२४ ) । श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ( रघु० ११।४२ ) । कारकत्वाविवक्षायां षष्ठीमपि शैषिकीं प्रयुक्तां पश्यामः । स यद्यदर्शमित्याहाथास्य श्रद्दधति ( ऐ० ब्रा० १।६ ) । अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः (भा० वन० २०७।४७)। श्रद्धत्स्व मम ब्रह्मन् नान्यथा कर्तुमर्हसि ( भा० वन० २१५।१० ) ।

हयानर्थे युनक्ति हयैर्वा रथमित्युभयो व्यवहारः प्रतितिष्ठति । तथा च भारतगते उदाहरणे—योजयामास संहृष्टः पुनरेव रथोत्तमे ( हयान् ) ( द्रोण० १००।१६ ) । तान्रथान्साधुसम्पन्नान्संयुक्तान् जवनैर्हयैः ( वन० २४४।४ ) । धूः शब्दप्रयोगे तु धुरि नियता सप्तमी—गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते । अजातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥ पुरुहूत द्विषो धूर्षु युक्तान् यानस्य वाजिनः ( भट्टि० ९।६७ ) ।

गुरुः प्रहर्षः प्रबभूव नात्मनि ( रघु० ३।१७ )। शरीरे गुरुः प्रहर्षो न ममावित्यर्थः । भागवतकारस्तु विधान्तरेणेममर्थमाचष्टे । यदाह—मुदा शरीरे प्रबभूव नात्मनः पाथोधिरिन्दूदयमूर्छितो यथा ( १।११।६ ) । अयं च वाक्यविन्यासो वर्तमानहिन्द्यभिधानविषयाऽनवयवेन संवदतीत्यस्यार्वाचीनत्वे लिङ्गम् । माधातुप्रयोगेपि कालिदासश्रिता सरणिरेव कविभिराश्रीयते—तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ( शिशु० १।२३ ) । इत्यत्र यथा ।

पुत्रादेः कृतकत्वेन परिग्रहे क्लृपेर्व्यवहारो व्यवस्थितः, स समीक्षितव्यः—तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः । पुत्रत्वे कल्पयामास ( भा० आदि० १११।२३ ) ॥ धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति ( भा० वन०

### वाग्व्यवहारादेशः

द्रा कुत्सायां गताविति धातुर्निपूर्वः स्वापे संवेशे प्रसिद्धः, परं यदि निद्रा-यात्कामं स्वप्याद् (श० ब्रा० ३।९।३।११) इत्यत्र निद्रा प्रमीलामाह । निद्रायात् प्रमीलितः प्रचलायितः स्यात् ।

अर्ते ऋच्छतेर्वा ण्यन्तस्याण्यन्तस्य वा प्रयोगे सविशेषमवधेयं व्यवहारे कोविदैर्बुभूषुभिः । ऋ गतौ, ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेष्विति धातू । इयं वै तं निरर्पयति यो निर्ऋच्छति ( श० ब्रा० ७।२।१।११ ) । योऽपराध्यति परस्मै परं वा क्षिणोति तमियं दुःखेन युनक्तीत्याह । ततस्त्वमर्षी क्रोधसन्दीप्तनेत्रो वातात्मजः पाणिना पाणिमार्च्छत् ( भा० कर्ण० ८९।३६ ) । आर्च्छत् अताडयत् । पाञ्चाल्यं त्रिभिरानर्च्छत्सात्यकिं नवभिः शरैः ( भा० भीष्म० ४७।३१ ) । आनर्च्छत् = आर्च्छत् = अविध्यत् । अर्जुनः पञ्चविंशत्या भीष्ममार्च्छच्छितैः शरैः (भा० भीष्म० ५२।४८) । उक्तपूर्व एवार्थः । बहुधा भीष्ममानर्च्छ मार्गणैः क्षतमार्गणैः ( भा० भीष्म० ११८।४८ ) ।

केवलोऽण्यन्त ऋच्छतिः समासक्तौ समासने वाऽपि वर्तते—राज्ञश्चान्यान्रणे शूरान्बहूनार्च्छद् धनञ्जयः (भा० भीष्म० ७२।२) । स्थाणुं वर्च्छति गर्तं वा पात्यते (का० सर्वानु०) इत्यत्र स्थाणुना प्रतिहन्यत इत्यर्थ इति ऋच्छतिः प्रतिघाते वर्तते । भारतेपि तत्रार्थे प्रयोगः—प्रमत्तः स्थाणुमृच्छति ( सभा० ६५।१९ ) । ण्यन्तस्तु प्रायेण व्यधने वर्तते । बहुलं चात्रोदाहरणम् । मा ते मर्म विसृग्वरि मा ते हृदयमर्पिपम् (अथर्व० १२।१।३५) । मा अर्पिपम् माऽपिपीडम्, मा व्यात्सम् । द्रोणं प्रध्या महाराज बाह्वोरुरसि चार्पयत् । स विद्धो व्यथितश्चैव (भा० भीष्म० १०१।४६–४७ ) । व्यक्तमिहार्पयद् अविध्यदित्यनर्थान्तरम् उत्तरार्द्धे विद्ध इत्युक्तेः । वार्ष्णेयं समरे क्रुद्धो नाराचेन समार्पयत् । शैनेयं स तु निर्भिद्य ( भा० भीष्म० १०१।४९–४९ ) । इहापि समार्पयदिति निरभिनदित्यनेन समानार्थम् । अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ( भा० भीष्म० ७८।२१ ) । अत्र समाचिनोदिति पाठान्तरम् । नैतावता समाचयनमाच्छादनमर्थः शक्यः कल्पयितुम् । अन्यत्र सर्वत्र व्यधनार्थस्यासन्देहं प्रतीतेः । पितामहस्त्रिभिर्बाणै र्बाह्वोरुरसि चार्पयत् ( भा० भीष्म० १०३।८ ) । आच्छादनमर्थस्तु नोपपद्यते । न हि त्रिभिर्बाणैराच्छादनं शक्यक्रियं भवति । अनन्तरपरस्मिन्पद्ये शिखण्डी पञ्चविंशत्या भीष्मं विव्याध सायकैरित्यत्र विव्याधेति क्रियायाः श्रवणादत्रापि व्यधनार्थ एवोचितोऽसंशयम् ।

शाम्यतिः शमे प्रसिद्धः सन्धावपि वर्तते तद्यथा—महद् वो भयमागामि न चेच्छाम्यथ पाण्डवैः ( भा० उ० ५८।२७ ) । न शाम्यथ = न सन्धत्थ ।

अबि-रबि लबि शब्दे । लबि अवस्रंसने चेति धातुपाठः । लम्बेः प्रयोगनानात्वमुदाहरामः, अवधानं च तत्र दीयमानमिच्छामः । यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा । स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते (भा० आदि० ७९।२)॥ रश्मिषु लम्बते प्रग्रहान्धारयति। जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः (भा० द्रोण० १४१।२१)। लम्बते पश्चिमाशामालम्बते। शूरबाहुषु लोकोयं लम्बते पुत्रवत्सदा ( भा० शां० ९८।१७ ) । लम्बते श्रयते, तत्राधृतो भवति ।

प्राप्त्यर्थो लभिः । तत्रोदाहरणं नापेक्ष्यम् । शकेरर्थेपि प्रयोगमवतरति—कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन् । लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ( भा० उ० ३।५ ) ॥ लभते शक्नोति उत्सहते ।

श्रद्दधातेः प्रयोगे कारकनानात्वं द्रष्टव्यं भवति । श्रदस्मै धत्त स जनास इन्द्रः (ऋ० २।१२।५) । अश्रद् दधत् परलोकाय मूढः ( भा० उ० २७।९ ) । स एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम ( श० ब्रा० १।३।१।२७ ) । कः श्रद्धास्यति भूतार्थम् ( मृच्छक० ३।२४ ) । श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ( रघु० ११।४२ ) । कारकत्वाविवक्षायां षष्ठीमपि शैषिकीं प्रयुक्तां पश्यामः । स यद्यदर्शमित्याहाथास्य श्रद्दधति ( ऐ० ब्रा० १।६ ) । अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः (भा० वन० २०७।४७)। श्रद्धत्स्व मम ब्रह्मन् नान्यथा कर्तुमर्हसि ( भा० वन० २१५।१० ) ।

हयान्रथे युनक्ति हयैर्वा रथमित्युभयो व्यवहारः प्रतितिष्ठति । तथा च भारतगते उदाहरणे—योजयामास संहृष्टः पुनरेव रथोत्तमे ( हयान् ) ( द्रोण० १००।१६ ) । तान्रथान्साधुसम्पन्नान्संयुक्तान् जवनैर्हयैः ( वन० २४४।४ ) । धूःशब्दप्रयोगे तु धुरि नियता सप्तमी—गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते । असंजातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥ पुरुहूत द्विषो धूर्षु युक्तान् यानस्य वाजिनः ( भट्टि० ९।६७ ) ।

गुरुः प्रहर्षः प्रबभूव नात्मनि ( रघु० ३।१७ ) । शरीरे गुरुः प्रहर्षो न ममावित्यर्थः । भागवतकारस्तु विधान्तरेणेममर्थमाचष्टे । यदाह—मुदा शरीरे प्रबभूव नात्मनः पाथोधिरिन्दूदयमूर्च्छितो यथा ( १।११।६ ) । अयं च वाक्यविन्यासो वर्तमानहिन्द्यभिधानविषयाऽन्वयवेन संवदतीत्यस्यार्वाचीनत्वे लिङ्गम् । माधातुप्रयोगेपि कालिदासश्रिता सरणिरेव कविभिराश्रीयते—तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ( शिशु० १।२३ ) । इत्यत्र यथा ।

पुत्रादेः कृतकत्वेन परिग्रहे क्लृपेर्व्यवहारो व्यवस्थितः, स समीक्षितव्यः—तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः । पुत्रत्वे कल्पयामास ( भा० आदि० १११।२३ ) ॥ धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति ( भा० वन०

जगाम मनसा रामम् (रा० २।९६।६)।

क्वचिदत्र विषये करोतिरपि प्रयुक्तो दृश्यते — कुर्वाणं च मनसा कृत्वा ( भा० आदि० १८८।१८)।



३०८।१७ ) ॥ अत्र पुत्रत्वे इत्यत्र सप्तम्यां सविशेषमवधेयम् । नेह विभक्त्यन्तरं प्रयुञ्जते प्रयोगचणाः ।

चिन्तने स्मरणेऽभिधेये चिन्तयतिं स्मरतिं वा व्यतिरिच्य गमिमपि व्यवहरन्ति वाग्योगविदः—हरिं मनसा जगाम ( भा० )। सा भीमं वै मनसाऽगमत् ( भा० वि० १७।४ )। कर्णं राज्ञोऽगमन्मनः ( भा० कर्ण० ३१।१५ )। एकत्र मनः करणमपरत्र च कर्तृ। उभयी विवक्षा शिष्टानाम्। सा मनसि करणीया।

विशेर्व्यवहारेऽपि कारकभेदो विलोक्यते सुस्थितः। पुरन्दरस्तु तं यज्ञं दृष्ट्वो-रुभयमाविशत् ( भा० आदि० ५६।१४ )। अत्र पुरन्दरो विशेः कर्ता। वृत्रे विवर्धमाने च कश्मलं महदाविशत् ( पुरन्दरः ) ( भा० वन० १०१।८ )। अत्रापि तथैव। पुरन्दरमुरुभयमाविशदित्येवमपि शक्यं वक्तुम्। शोकस्थान-सहस्राणि ··· मूढमाविशन्ति न पण्डितम् ( हितोप० १।३ )। अत्र मूढो विशेः कर्म। तथाजातीयकः प्रयोगः श्रीरामायणेऽपि—विविशुश्च भयं सुराः (१।२१।४)। सुरान्भयमाविशद् इत्येवमपि शक्यं वक्तुम्। तथा च भारते ततो मां रोष आविशत् ( भा० वन० २०।१९ )। दृष्ट्वा दुर्योधनं राजन्मैत्रेयं कोप आविशत् ( भा० वन० १०।३१ )। ततो भीः प्राविशत्कर्णम् ( भा० कर्ण० ४९।४५ )।

नतेन मूर्ध्ना जानुभ्यां वा भूस्पर्श इत्थम्भूतेऽपि प्रचरति व्यवहारो व्यवहारं विदुषाम्—जगाम शिरसाऽवनिम् ( भा० सभा० ३१।३२ )। जानुभ्यां पृथिवीं गत्वा ( भा० अनु० १४।४२ )।

पालनेऽर्थे पठितस्य रक्षेरर्थवैचित्र्यकृतं किमपि चारुत्वं दृश्यते। विग्रहं दूरतो रक्षन् ( भा० सभा० ४६।२९ )। दूरतो रक्षन् दूरे परिहरन्नित्यर्थः, वारयन्निति वा। किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत ( भा० सभा० ६५।४३ )। आकारं हर्षकृतं स्वाभिप्रायं तिरोधातुं संवरीतुं नाक्षमतेत्यर्थः।

कृती छेदन इति तुदादिषु पठ्यते। अयमुद्धरणेऽपि वर्तते तथा च भारतस्थः प्रयोगः—न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ( सभा० ६८।७७ )। शल्यं कण्टकं नोद्धरन्तीत्याह।

वाक्यप्रबन्धे पठितस्य कथेरनुपसृष्टस्य संभाषणेऽर्थे प्रयोगो भारतस्थः—केन सार्धं कथयसि ( वन० १२।१०२ )। केन संकथयसि, केन संभाषसे, केन संलपसीत्यर्थः। कथयित्वा तु दुःखार्ताः सुमन्त्रेण चिरं सह (रा० २।५८।१२)।

उपजपेः प्रयोगे द्वितीयाप्रयुक्तिरुद्वेगकर्यपीदानीन्तनानां सह्या व्यवहार-विधेयानाम्। पठति च शब्दवित्तमो व्यासः—क्षत्तारं कुरुराजस्तु शनैः कर्णमु-पाजपत् ( भा० वि० ६७।५४ )। कर्णं उक्तवान्। उपांशु व्याहरदित्यर्थः।

उपेति सामीप्यमाह। कर्णमुपेत्याजपदित्येवं व्याख्यायमाने द्वितीयोपपत्तिमती भवति।

स्पृशेराहननं प्रहरणमर्थो मर्मस्पृगित्यादिषु समासेषूपलभ्यते। तिङन्तस्यापि तस्यायमर्थो भारतप्रयोगे दृश्यते स्फुटः--अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ( उ० १७।१२ )। अस्पृशत् आहन्, प्राहरत्, अताडयत्।

रामः सीतायाः पाणिं गृह्णातीत्यर्थाभिधित्सया रामः सीतां पाणौ गृह्णातीत्येवमपि शक्यमुदाहर्तुम् इत्यत्र नित्यं हस्तेपाणावुपयमने ( पा० १।४।७७ ) इति शास्त्रं लिङ्गम्। अन्यत्राप्युपयमनात्पाण्यादेः सप्तम्यन्ततामिच्छन्ति व्यवहारविशारदाः--तं पाणावादायोत्तस्थौ ( श० ब्रा० १४।५।१।१५ )। ततो दुर्योधनः कर्णमालम्ब्याग्रकरे नृपः ( भा० सभा० १३७।२० )। श्वेतकेतोः किल पुरा समक्षं मातरं पितुः। जग्राह ब्राह्मणः पाणौ (भा० आदि० १२२।११-१२)। अत्र विषये तृतीयाप्रयोगं न सहन्तेऽप्रकरेण पाणिनेति वा।

विस्मरणं स्मृतिप्रमोषमाह। तत्पूर्वके सहादेयद्रव्यत्यागेपि वर्तते यथाद्यत्वे प्रचरति भाषान्तरे हिन्द्याम्। इध्मा दर्भाः सुमनसः कलशश्चातिभोजनम्। विस्मृतं मे तदादाय नदीतीरादिहाव्रज ( भा० अनु० ७।५ )।

पौर्वकाल्ये क्त्वेति पाणिनीयमनुशासनम्। करणेपि स इष्यते तात्पर्यत इति समुदाह्रियते—हत्वा चैनं नामृतः स्यादयं मे ( भा० अनु० १।२३ )। इह करणत्वं क्त्वार्थः। अयं मे पुत्रोऽस्य हननेनामृतो न स्यादित्यर्थः। लौकिका अप्याचक्षते--भुक्त्वैव हि तृप्तो न तु पीत्वेति। भोजनेनैव तृप्तो भवति न तु पानेनेत्यर्थ इति नीलकण्ठः।

कृषिर्विलेखने भ्वादिश्च तुदादिश्च। समानेप्यर्थनिर्देशे विषयभेदेन प्रयोगो व्यवस्थितः, प्रतिनियतविषयाः शब्दाः। क्षेत्रं कृषतीत्येव न तु क्षेत्रं कर्षतीत्यपि। कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ( पा० ५।४।५८ )। इत्यत्र शम्बा करोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषतीत्यर्थ इति काशिका। दीक्षितस्त्वत्र कर्षतीत्याह। स प्रमादः। कर्षतेस्तु कृषेरन्यत्र कर्षणे प्रसिध्यन्ति प्रयोगाः-- अजां ग्रामं कर्षति, प्रसह्य सिंहः किल तां चकर्ष, महद्यशः कर्षतीत्यादयः। वेदे खल्वपि कृषौ कृषेस्तुदादेः प्रयोगः—शुनं सुफाला विकृषन्तु भूमिम् ( वा० सं० १२।६९ )।

आक्रोशे पठितस्य शपतेः प्रतिज्ञानेपि समुपलभ्यते प्रयोगः शतपथे--शेपानोस्मि नमुचये न त्वा दिवा न नक्तं हनानि ( १२।७।३।१ )। शेपानः प्रतिज्ञातवानस्मि, प्रतिश्रुतवानस्मि।

जगाम मनसा रामम् (रा० २।४६।६)।

क्वचिदत्र विषये करोतिरपि प्रयुक्तो दृश्यते — कुर्वाणं च मनसा कृत्वा (भा० आदि० १८८।१८)।



३०८।१७ ) ॥ अत्र पुत्रत्वे इत्यत्र सप्तम्यां सविशेषमवधेयम् । नेह विभक्त्यन्तरं प्रयुञ्जते प्रयोगचणाः ।

चिन्तने स्मरणेऽभिधेये चिन्तयतिं स्मरतिं वा व्यतिरिच्य गमिमपि व्यवहरन्ति वाग्योगविदः—हरिं मनसा जगाम ( भा० )। सा भीमं वै मनसाऽगमत् ( भा० वि० १७।४ )। कर्णं राज्ञोऽगमन्मनः ( भा० कर्ण० ३१।१५ )। एकत्र मनः करणमपरत्र च कर्तृ । उभयी विवक्षा शिष्टानाम् । सा मनसि करणीया ।

विशेर्व्यवहारेपि कारकभेदो विलोक्यते सुस्थितः । पुरन्दरस्तु तं यज्ञं दृष्ट्वो-रुभयमाविशत् ( भा० आदि० ५६।१४ )। अत्र पुरन्दरो विशेः कर्ता । वृत्रे विवर्धमाने च कश्मलं महदाविशत् ( पुरन्दरः ) ( भा० वन० १०१।८ )। अत्रापि तथैव । पुरन्दरमुरुभयमाविशदित्येवमपि शक्यं वक्तुम् । शोकस्थान-सहस्राणि ··· मूढमाविशन्ति न पण्डितम् ( हितोप० १।३ )। अत्र मूढो विशेः कर्म । तथाजातीयकः प्रयोगः श्रीरामायणेपि—विविशुश्च भयं सुराः (१।२१।४)। सुरान्भयमाविशद् इत्येवमपि शक्यं वक्तुम् । तथा च भारते ततो मां रोष आविशत् ( भा० वन० २०।१९ )। दृष्ट्वा दुर्योधनं राजन्मैत्रेयं कोप आविशत् ( भा० वन० १०।३१ )। ततो भीः प्राविशत्... ( भा० ... )।

नतेन मूर्ध्ना जानुभ्यां वा भूस्पर्शे इत्थम्भूतोपि प्रचरति व्यवहारो व्यवहारं विदुषाम्—जगाम शिरसाऽवनिम् ( भा० सभा० ३१।३२ )। जानुभ्यां पृथिवीं गत्वा ( भा० अनु० १४।४२ )।

पालनेऽर्थे पठितस्य रक्षेरर्थवैचित्र्यकृतं किमपि चारुत्वं दृश्यते । विग्रहं दूरतो रक्षन् ( भा० सभा० ४६।२९ )। दूरतो रक्षन् दूरे परिहरन्नित्यर्थः, वारयन्निति वा । किं जितं किं जितमित्याकारं नाभ्यरक्षत ( भा० सभा० ६५।४३ )। आकारं हर्षकृतं स्वाभिप्रायं तिरोधातुं संवरीतुं नाक्षमतेत्यर्थः ।

कृती छेदन इति तुदादिषु पठ्यते । अयमुद्धरणेपि वर्तते तथा च भारतस्थः प्रयोगः—न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ( सभा० ६८।७७ )। शल्यं कण्टकं नोद्धरन्तीत्याह ।

वाक्यप्रबन्धे पठितस्य कथेरनुपसृष्टस्य संभाषणेऽर्थे प्रयोगो भारतस्थः—केन सार्धं कथयसि ( वन० १२।१०२ )। केन संकथयसि, केन संभाषसे, केन संलपसीत्यर्थः । कथयित्वा तु दूतास्ते ... चिरं सह (रा० २।४७।१)।

उपजपेः प्रयोगे द्वितीयाप्रयुक्तिरुद्वेगकर्यपीदानीन्तनानां सह्या व्यवहार-विधेयानाम् । पठति च शब्दवित्तमो व्यासः—क्षत्तारं कुरुराजस्तु शनैः कर्णमु-पाजपत् ( भा० वि० ६७।५४ )। कर्णं उक्तवान् । उपांशु व्याहरदित्यर्थः ।

उपेति सामीप्यमाह। कर्णमुपेत्याजपदित्येवं व्याख्यायमाने द्वितीयोपपत्तिमती भवति।

स्पृशेराहननं प्रहरणमर्थो मर्मस्पृगित्यादिषु समासेषूपलभ्यते। तिङन्तस्यापि तस्यायमर्थो भारतप्रयोगे दृश्यते स्फुटः——अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः (उ० १७।१२)। अस्पृशत् आहन्, प्राहरत्, अताडयत्।

रामः सीतायाः पाणिं गृह्णातीत्यर्थाभिधित्सया रामः सीतां पाणौ गृह्णातीत्येवमपि शक्यमुदाहर्तुम् इत्यत्र नित्यं हस्तेपाणावुपयमने (पा० १।४।७७) इति शास्त्रं लिङ्गम्। अन्यत्राप्युपयमनात्पाण्यादेः सप्तम्यन्ततामिच्छन्ति व्यवहारविशारदाः——तं पाणावादायोत्तस्थौ (श० ब्रा० १४।५।१।१५)। ततो दुर्योधनः कर्णालम्ब्याग्रकरे नृपः (भा० सभा० १३७।२०)। श्वेतकेतोः किल पुरा समक्षं मातरं पितुः। जग्राह ब्राह्मणः पाणौ (भा० आदि० १२२।११-१२)। अत्र विषये तृतीयाप्रयोगं न सहन्तेऽग्रकरेण पाणिनेति वा।

विस्मरणं स्मृतिप्रमोषमाह। तत्पूर्वके सहादेयद्रव्यत्यागेऽपि वर्तते यथाद्यत्वे प्रचरति भाषान्तरे हिन्द्याम्। इध्मा दर्भाः सुमनसः कलशश्चातिभोजनम्। विस्मृतं मे तदादाय नदीतीरादिहाव्रज (भा० अनु० ७।१५)।

पौर्वकाल्ये क्त्वेति पाणिनीयमनुशासनम्। करणेऽपि स इष्यते तात्पर्यत इति समुदाह्रियते——हत्वा चैनं नामृतः स्यादयं मे (भा० अनु० १।२३)। इह करणत्वं क्त्वार्थः। अयं मे पुत्रोऽस्य हननेनामृतो न स्यादित्यर्थः। लौकिका अप्याचक्षते——भुक्त्वैव हि तृप्तो न तु पीत्वेति। भोजनेनैव तृप्तो भवति न तु पानेनेत्यर्थ इति नीलकण्ठः।

कृषिर्विलेखने भ्वादिश्च तुदादिश्च। समानेऽप्यर्थनिर्देशे विषयभेदेन प्रयोगो व्यवस्थितः, प्रतिनियतविषयाः शब्दाः। क्षेत्रं कृषतीत्येव न तु क्षेत्रं कर्षतीत्यपि। कृञो द्वितीयतृतीयशम्बबीजात्कृषौ (पा० ५।४।५८)। इत्यत्र शम्बा करोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषतीत्यर्थ इति काशिका। दीक्षितस्त्वत्र कर्षतीत्याह। स प्रमादः। कर्षतेस्तु कृषेरन्यत्र कर्षणे प्रसिध्यन्ति प्रयोगाः——अजां ग्रामं कर्षति, प्रसह्य सिंहः किल तां चकर्ष, महद्यशः कर्षतीत्यादयः। वेदे खल्वपि कृषौ कृषेस्तुदादेः प्रयोगः——शुनं सुफाला विकृषन्तु भूमिम् (वा० सं० १२।६९)।

आक्रोशे पठितस्य शपतेः प्रतिज्ञानेऽपि समुपलभ्यते प्रयोगः शतपथे——शेपानोऽस्मि नमुचये न त्वा दिवा न नक्तं हनानि (१२।७।३।१)। शेपानः प्रतिज्ञातवानस्मि, प्रतिश्रुतवानस्मि।

वेदस्नातः, व्रतस्नातः, वेदव्रतस्नात इत्यादयो वेदादिसमाप्तिनिमित्तेन स्नातः कृतस्नानो गुरुकुलात्समावृत्त इत्यर्थमाहुः। तच्च सर्वस्य निर्विशेषं विदितम्। तत्रार्थे वेदसमाप्तौ स्नातस्य समावृत्तिमन्यथाप्युपवर्णयन्ति सन्तः—सर्ववेदेषु वा स्नानं सर्वभूतेषु चार्जवम्। उभे एते समे स्यातामार्जवं वा विशिष्यते ( भा० अनु० १४२।२९ )॥

आशीः-प्रदाने वर्धस्वेत्यनुक्त्वा प्रकारान्तरमपि मनोज्ञं जुषन्ते साहितीजुषः—त्वं मया सह गत्वाद्य राजानं कुरु वर्धनम् ( भा० आश्व० १५।३२ )। राजानं वर्धनं ( वर्धनशीलं ) कुरु, राजानं वर्धयेत्यर्थः।

भक्तशब्दप्रयोगे किमपि विभक्तिवैचित्र्यं विलोक्यते। अद्यत्वे प्रायेण षष्ठी प्रयुज्यते तदात्वेपि—भक्तोसि मे सखा चेति ( गीता० ४।३ )। भारतेऽत्र विषये द्वितीयासप्तम्यावपि श्रूयेते इत्युदाहरामः—सर्वभावेन भक्तः स देवदेवं जनार्दनम् ( शां० ३३५।१७ )। स भक्तो मागधं राजा भीष्मकः परवीरहा ( सभा० १४।२२ )। भक्तो नारायणं हरिम् ( शां० ३३५।२१ )। भक्तोऽस्मान् ( भीमः ) भक्तिमांश्चाहं तमप्यरिनिषूदनम् ( भीष्म० ७७।३० )। अयं श्वा भूतभव्येश भक्तो मां नित्यमेव हि ( महाप्रस्थान० ३।७ )। श्रीरामायणेपि द्वितीयाप्रयुक्तिः स्थिता—ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ( ६।११७।३२ )। सप्तमी खल्वपि—युधिष्ठिरे भक्त इति श्रुतं मे ( भा० उ० २२।१९ )।

अकारमात्रभक्तोऽयं मुगागम इति आने मुक् ( ७।२।८२ ) सूत्रे वृत्तिः। तत्राकारस्यावयवभूत इत्यर्थः।

सर्वशब्दः सम्पूर्णपर्यायः प्रसिध्यति। सर्वमायुरेति पूर्णमायुः समश्नुत इत्यर्थः। सर्वत्वं पूर्णता कार्त्स्न्यं भवति। तस्य प्रयोगः शतपथे—अथ कृष्णाजिनमादत्ते यज्ञस्यैव सर्वत्वाय ( १।१।४।१ )।

सार्धमित्यव्ययं सहार्थे वर्तत इति न वेदनीयाः शिष्याः प्राथमकल्पिका अपि। प्रयोगस्त्वस्य न सर्वो विदितः। तानालुप्य ( बालान् ) सार्धं संन्यासुः ( श० ब्रा० ३।४।१।१७ )। सार्धं सहचरितान् संगतान् कृत्वा संन्यासुर्निदधुरित्यर्थः।

परशब्दोऽन्यमुत्तमं प्रकृष्टं प्रधानं वाह। अवस्थाविशेषणं सन्मरणमपीत्युदाह्रियते व्यवहारस्य सर्वत्वाय—सर्वाणि सत्त्वानि खलूष्णकाले विनाम्बुना यान्ति परामवस्थाम् ( का० नी० सा० १६।९ )। परामवस्थां यान्ति मरणमापद्यन्त इत्यर्थः।

परमम् इत्यव्ययं बाढमित्यर्थे पठत्यमरः। स्यादोमेवं परमं मते। मतेऽर्थे। मतमभ्युपगमः। परमं तत्रावसम् इति चोदाहरति स्वामी। इदं किमुदाहरणं ग्रन्थानारूढम्। भारतस्थमिदं सूदाहरणं सेव्यताम्—ऊचुः परममित्येवं पूजयन्तोऽस्य तद्वचः (उ० ८५।११)।

मिश्रशब्दः सर्वस्य विदितः। तत्र ब्रह्मेतिहासमिश्रम् ऋङ्मिश्रं गाथामिश्रं भवति (नि० ४।६।१)। गुडमिश्रा धाना इत्यादयः प्रयोगा विदितार्थाः प्रथन्ते। सन्ति चास्य केचन प्रयोगादिचित्रीयाकराः, ते लक्षयितव्याः। मिश्रं चानुपसर्गमसन्धौ (पा० ६।२।१५४)। अत्र ब्राह्मणमिश्रो राजेति प्रत्युदाहरणं वृत्तौ। ब्राह्मणैः सह संहित ऐकार्थ्यमापन्न इत्यर्थः। सन्धिरिति पणबन्धेनैकार्थ्यमुच्यत इति वृत्तिव्याख्यानग्रन्थः। स्वर्गंत्वा मिश्रा देवेभिराध्वम् (श० ब्रा० ९।२।३।२४)। मिश्राः संगताः। तया चाप्यभवन्मिश्रो गर्भं चास्या दधे तथा (भा० अनु० ८५।५६)। मिश्रोऽभवत् तां संविवेश, तया सम्बभूव, मिथुनीबभूवेत्यर्थः। हरिवंशे ( ) ऽपि तत्रार्थे प्रयोगः—संज्ञसमश्वमाविश्य तया मिश्री बभूव सः।

दिष्ट्येति सुबन्तप्रतिरूपकमव्ययमानन्दे वर्तते। दिष्ट्या समुपजोषं चेत्यानन्द इत्यमरः। अस्य प्रयोगो दिष्ट्याऽत्र भवान् पुत्रोत्सवेन वर्धते इत्यादिषु हर्षप्रवेदनपरेषु वाक्येषु प्रसिद्धः। तत्रैव प्रतिनियत इति भ्रमः। अन्यत्रापि प्रहर्षप्रवेदने बहुलं प्रयुज्यते। दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा। दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः (भा० आदि० २०६।५)। दिष्ट्या सर्वे पावकाद् विप्रमुक्ता यूयं घोरात्पाण्डवाः शत्रुसाहाः। दिष्ट्या पापो धृतराष्ट्रस्य पुत्रः सहामात्यो न सकामोऽभविष्यत् (भा० आदि० १९१।२४)। दिष्ट्या त्वं दर्शनीयोऽथ दिष्ट्यात्मानं प्रशंससि (भा० वि० २२।४७)। दिष्ट्या प्राप्तोसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ (भा० वन० ६।१९)। तृतीयान्तप्रयोगो वर्धतिप्रयोगश्चेत्युभयमप्यतन्त्रम्।

उष्णीष इति पुंसां शिरोवेष्टनं भवतीत्ययमपि विभ्रमः। स्त्रीणामप्युष्णीषो भवति। तेनोष्णीष इति शिरस आवरणं भवति नावश्यं शिरोवेष्टनमेव। तथा च शतपथे प्रयोगः—आदित्यै रास्नासीन्द्राण्या उष्णीष इति।

आविष्कृतः प्रकटीकृतः प्राकट्यं नीत उच्यते। आविष्कृतः क्षितौ (भा० आदि० १७२।५)। इहाविष्कृतः प्रख्यातो विश्रुतः प्रतीतः प्रसिद्ध उच्यते। तथा खनति यथाऽनाविरुपरं भवति (भा० श्रौ० ७।८।१२)। अनाविरप्रकाशम्। आच्छन्नम्। नोपरस्याविष्कुर्यात् (नि० ३।५।२)। उपर इति यूपस्यातष्टप्रदेश उच्यते तं पांसुभिर्बर्हिषा चाऽऽच्छादयेत्। नाविष्कुर्यात् नानावृतं कुर्यात्।

पाणिगृहीती पाणिगृहीतेति द्वयी न न विदितम्। पूर्वा विधिवत्परिणीता भवति यथाकथंचिदङ्गरोधं नीता। भो तरा वरं पुमानपि पाणिगृहीतो भवति यः पाणौ गृहीत्वा भ्रशपथः ...



प्रयोगः — ... (४।५५।५)।

पूर्वशब्दो न्यायनये कारणवचनः प्रसिद्धः, अन्यत्रापि तदर्थकः समस्ति— विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् ( भा०आदि० २०४।१५ )। विधिर्दैवं पूर्वं कारणं यत्र तद् विधिपूर्वम्। दुःखमित्यस्य विशेषणं सुखमित्यस्य च।

तं प्रष्टुमेतीत्यस्मिन्नर्थे तस्मिन् प्रश्नमेतीत्यादि प्रयुञ्जते पुरा वाग्योगविदः। तथा चैतरेये प्रयोगः—ते देवेषु प्रश्नमैताम् ( ऐ० ब्रा० १३।४ )। देवेष्वगच्छतां न्यायं प्रष्टुं किन्वत्र साध्विति। एष व्यवहारो बहुल उपनिषत्सु।

एकीयशब्दस्य स्वतन्त्रप्रकृतेः समासान्तगतस्य च प्रयोग आद्रियते स्म पुरातनैः सोऽधुनातनैरपि सम्यग्ज्ञातः समादरमर्हति। अवदानमालायामार्यशूरकृतायामयं रुचिरार्थः श्लोकः स्थितः—वाशितार्थस्वहृदयाः प्रायेण मृगपक्षिणः। मनुष्याः पुनरेकीयास्तद्विपर्ययनैपुणाः ( जा० २२।१९ )॥ एकीयाः केवलाः, एके। अमरोद्घाटने स्वाम्यप्युद्धरति—हृदयं तद् विविङ्क्ते यद्भावमन्यच्चलं पलम्। शतैकीयाः सहृदया गण्यन्ते कथमन्यथा॥ शतैकीयाः शतमध्य एकसंख्यावच्छिन्नाः।

प्राक्छब्दार्थं के न जानते, पुरार्थे प्रयोगमपि जानन्ति समे। किम्पुनः किमुतेत्यर्थे तु विरला अस्य व्यवहारं विदुः। स वेद्यते। तदेवं तपोवनस्थानामप्यलङ्कारस्यागशौर्यं प्रागेव गृहस्थानाम् (अवदा० जा० ८)। न बोधिसत्त्वचरितं सुखमनुमोदितु मप्यल्पसत्त्वैः प्रागेवाचरितुम् ( अवदा० जा० ९ )।

उद्देशः प्रदेशो भवति। निमित्तं प्रयोजनं नामनिर्देशश्चापि भवतीति विदितप्रायम्। उद्देशः संक्षेपः संग्रहोपि भवतीति वेद्यम्। तथा च भारते प्रयोगः— माहात्म्यमपि चैवोक्तमुद्देशेन गवां प्रभो ( अनु० ७२।१ )।

अलीकमिति मिथ्यापरपर्यायः। तदलीकं तन्मिथ्येत्यर्थः। अनृतवचनेपि प्रयुज्यते विशेष्यभूतम्—एवंविधान्यलीकानि धार्तराष्ट्रैर्दुरात्मभिः। पाण्डवेषु वनस्थेषु प्रयुक्तानि ( भा० वन० २६३।४९ )। अलीकानि असत्यवचनानि दूषणानीत्यर्थः।

पुरतः पुरोऽग्रत इति समानार्थाः। पुरत इति प्रागर्थेपि प्रयोगमवतरन्दृष्टः। पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः ( भा० आदि० २३२।१ )। कृच्छ्रकालात्प्रागित्यर्थः।

प्रभृतिशब्दोऽव्ययमनव्ययं च। कार्तिक्याः प्रभृतीत्यादिष्वव्ययम्। आरभ्येत्यर्थः। आदिशब्दार्थेऽनव्ययम्। विश्वामित्रप्रभृतय ऋषयः। विश्वामित्रादय इत्यर्थः। यज्ञस्य चक्षुः प्रभृतिर्मुखं च ( अथर्व० २।३५।५ )। अग्निर्यज्ञस्य

( पुंले पुत्राय वे नवे (तै० ब्रा०३/७/१२/८)। पुंस्त्वसामर्थ्योपेता-येति यदाह।



प्रभृतिरादिरादिभूत इत्याह। आरम्भोपि प्रभृतिर्भवति। ता वै नानाप्रभृतयः समानोदर्काः ( श० ब्रा० ८।७।१।३ )। नानाप्रभृतयः = आरम्भे नाना।

एकायनगत एकायन एकसर्ग एकाग्र इत्यनर्थान्तरम्। एकायनगत इत्यन्यत्राप्यर्थे दृश्यते—तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ( भा० आदि० १७६।५ )। एकस्यैवायनं गमनं यत्र तत्र गतः। संकुचितमार्गे गत इत्यर्थः।

युक्तायुक्तशब्दयोः क्रियाविशेषणयोः प्रयोगः शतपथे, तत्रावधीयताम्—वयांसि युक्तं चायुक्तं च संचरन्ति ( १२।४।१।३ )। युग्मचारीण्ययुग्मचारीणि च भवन्तीत्याह।

पुत्रशब्दः कन्यावचनोपि भवति। पुमांसं पुत्रं जनय तं पुमाननुजायताम् ( अथर्व० ३।२३।३ )। पुमान्पुत्रो जायते ( वा० सं० ८।५ )। दुहितापि पुत्रशब्देनोच्यते इत्यतः पुमान् इति विशेष्यत इत्युवटः। सायणस्त्वन्यथा पश्यति

नित्यशब्दो ध्रुववचनोऽभीक्ष्णंवचनोऽपि प्रसिद्धः। प्रधानवचनोपि स भवतीत्युच्यते। अर्थनित्यः परीक्षेत ( नि० २।१।३ )। अर्थप्रधान इत्यर्थः। धर्मनित्ये युधिष्ठिरे ( भा० सभा० ३३।५ )। धर्मप्रधान इत्यर्थः। विशेषणस्य परनिपातो व्यवहारतो न शास्त्रतः। मुद्गनित्यमेवास्य भोजनमित्युक्ते मुद्गप्रधानमिति गम्यत इति दुर्गः।

उदर्कः फलमुत्तरमित्यमरः। अयमेवैकोऽस्यार्थ इति मा ग्रहीः। अन्येपि सन्ति केचनार्थाः शिष्टप्रमाणिताः। उदर्क उत्तरकालः। उदर्कस्तव कल्याणि कल्याणो भविता शुभे ( भा० वन० ६४।९२ )। उदर्को भाग्योदयः। उदर्कस्तव कल्याणि तुष्टो देवगणेश्वरः ( भा० आदि० ११३।३१ )। उदर्कोऽन्तोपि भवति। ता वै नानाप्रभृतयः समानोदर्काः ( श० ब्रा० ८।७।१।३ )।

भार्यास्पर्शमप्यवर्जयदित्यर्थविवक्षया भार्यां स्पर्शेप्यवर्जयदित्येवमपि व्यवहरन्ति वाग्योगविदः। अयं व्यवहारः कथासरित्सागरे (१४।४७।२७) इत्यत्र स्थितः।

परवच्छब्दः पराधीनमाह। एतद्योगे विभक्तिद्वैविध्यं दृश्यं भवति प्रतिनियतविषयम्। परवन्तो वयं राजंस्त्वयि। अत्र सप्तम्याः प्रयोगः। भ्रात्रा यदित्थं परवानसि त्वम् ( रघु० १४।५९ )। अत्र तृतीयायाः। यत्र पुरुषे पारवश्यं तत्रोभयी विवक्षा। अन्यत्र तु तृतीयाप्रयुक्तिर्नियता। परवानिव शरीरोपतापेन ( मालती० ३ )। विस्मयेन परवानस्मि ( उत्तर० ५ )। साध्वसेन परवान् ( मालती० ६ )।

दसु उपक्षय इति धात्वर्थनिर्देशेप्युपोपसर्ग उपसर्गपूर्वस्यैवास्य प्रयोग इति नियमद्योतकः। न वो दस्रा उपदस्यन्ति धेनवः ( ऋ० ५।५६।५ )।

कुत्र एकायनगतो इति लक्ष्यते इत्यर्थमर्थं गति—पथश—एकायनगत हेत्वभिप्रायेऽर्थं (भा० शान्ति०१३६)।

उतो रयिः पृणतो नोपदस्यति ( ऋ० १०।११७।१ )। प्रजया स विक्रीणीते पशुभिश्चोपदस्यति ( अथर्व० १२।४।२ )।

सृष्टधृतौ निश्चितौ कृतनिश्चयावपि भवतः। तथा च श्रीरामायणे प्रयोगौ—यत्सृष्टासि मया सार्धं वनवासाय मैथिलि ( २।३०।२९ )। सर्गशब्दो नानार्थः। पठति चामरः—सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु। सर्गो निश्चयः। सृष्टो निश्चितवान्। रावणस्य वधे धृतः ( ६।१००।३९ )। गन्तुं निश्चिनोतीत्यर्थे गमनाय मनो धरति दधातीति वेति वाक्यविन्यासोपि व्यवहारानुगो भवति। तथा च भारते प्रयोगः—गमनाय मनो दधे (दध्रे) ( शां० २३१।६४ )।

पूञ् पवन इत्यस्य विभाजने पृथक्करणेऽर्थे पाप्मभ्यश्च पुनातु वर्धयतु च श्रेयांसि सेयं कथा (उत्तर० ७।२०) इत्यत्र प्रयोगः प्रथते नाम। तदर्थकस्य शुम्भेरपि प्रयोग आथर्वणे स्थितः—यद्रिप्रं शमलं चकृम यच्च दुष्कृतम्। आपो मा तस्माच्छुम्भन्तु··( अथर्व० १२।२।४० )। पञ्चमी चात्रोभयत्र समाना।

दानार्थस्य शिक्षेः कर्मणि तृतीयाश्रुतिः सम्प्रदाने च द्वितीयेति काचित्कश्छान्दसो व्यवहारः। सपत्नहनमृषभं घृतेन कामं शिक्षामि हविषाऽऽज्येन ( अथर्व० ९।२।३ )। कामाय हविराज्यं ददामीत्यर्थः।

राज्ये भिषिक्तः, राज्येऽभिषिच्यत इति रूढिः। क्वचित् तृतीयाचतुर्थ्यावपि प्रयुज्येते। अतो मूलं सुराणां श्रीर्यत्र शक्रोभिषिच्यते। सुरराज्येन··(भा० उ० १०७।८ )। अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यषिच्यत (भा० उ० १११।८)। चतुर्थी खल्वपि—येनेन्द्रं देवा अभ्यसिञ्चन्त राज्याय (आप० श्रौ० ६।४।१४।७)।

परेणेति एनबन्तमशिष्टमपि शास्त्रेण बहुलं व्यवह्रियते—परेणास्मान्प्रेहि वै हव्यवाह (भा० आदि० २३२।११)। अस्मत्तः परत इत्यर्थः। किं वा मृत्योः परेण विधास्यति ( मालती० २।२ )। स्तन्यत्यागात्परेण ( उत्तर० २।७ )।

विरुद्धं प्रतिकूलमित्यनर्थान्तरम्। कर्मणि क्तः। कर्तरि तृतीयाप्रयुक्तिः शास्त्रव्यवहारोभयानुकूला—न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः। ( भा०सभा० २८।१५)।

विहस्तव्याकुलौ समावित्यमरः। रामापरित्राणविहस्तयोध—(रघु० ५।४९)। नानायुधविहस्त—(हरि० १३२३८) इत्यत्र तु विहस्तो विचक्षण इत्यनर्थान्तरम्।

सकाशशब्दः समीपवचनः सर्वस्य विदितः, राज्ञः सकाशं गच्छति, राज्ञः सकाशादागच्छतीति। ततोऽन्यत्रापि वर्तते। तथा च याज्ञवल्क्यस्मृतौ प्रयोगः—अग्नेः सकाशाद् विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ( १।३१६ )। अग्नेः सकाशात् अग्निमपेक्ष्य, अग्न्यपेक्षया।

संभवतिर्मिथुनीभावे वर्तमानः क्वचित् सकर्मकः, तथा च शतपथे मैत्रायण्यां संहितायां च प्रयोगः—प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ दिवं वोषसं वा मिथुन्यनया स्यामिति तां संबभूव ( श० ब्रा० १।७।४।१ )। अग्निर्ह वाऽपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः सम्बभूव, तासु रेतः प्रासिञ्चत् ( श० ब्रा० २।१।१।५ )। अग्निर्वै वरुणं ब्रह्मचर्यमागच्छत् प्रवसन्तं तस्य जायां समभवत् ( मै० सं० १।६।१२ )। अकर्मकः खल्वपि—प्रजावती पत्या संभवेह ( अथर्व० १४।२।३२ )। महर्षिः संविदं कृत्वा संबभूव तया सह ( भा० आदि० १७७।४४ )। संबभूव तया सार्धं मातुः प्रियचिकीर्षया ( भा० आदि० १०६।६ )। स तथेति प्रतिज्ञाय तया समभवन्मुनिः ( भा० वन० ९९।२३ )।

प्रत्ययशब्दोऽमरेणाधीनादिष्वर्थेषु पठितः, अनुक्रान्ताश्च तेर्था इत्थम्—प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु। अधीनेऽर्थे किमुदाहरणम्। राजप्रत्ययाः प्रजा इति स्वामिनः स्वकपोलकल्पितमुदाहरणम्। तेन न परितोषो विदुषाम्। इदमिह भारतस्थमुदाहरणम्—येषां स्वप्रत्ययः स्वर्गः ( अनु० ८।३ )। स्वप्रत्ययः स्वाधीनः।

अभिरूपशब्दो विद्वत्पर्यायः प्रतीतः। ततोऽभिरूपान्भीष्माय ब्राह्मणानृषिसत्तमान् (भा० आश्रम० १४।३)। अभिरूपा विद्वांसो विपश्चितः। अभिरूपभूयिष्ठा परिषत् ( शा० १ )। अभिरूपः षट्कर्मनिरतः ( गौ० ध० २।१।४४ ) सूत्रे हरदत्तः।

निःशलाकशब्दोऽमरे विजनार्थकः स्थितः। विविक्तविजनच्छन्ननिःशलाकास्तथा रहः। रहश्चोपांशु इत्येते तत्र पर्यायाः पठिताः। अत्रार्थे अरण्ये निःशलाके वा मन्त्रयेदविभावितः ( मनु० ७।१४७ )। इत्यत्र पाठः। भारते तु निस्तृणेर्थेऽस्य प्रयोगः—समे देशे विविक्ते स निःशलाक उपाविशत् ( शां० ३३२।१ )।

करतलाभ्यां ध्वनिकरणं वक्तुकामाः प्राञ्चः करतलध्वनिं कुर्वन्ति, करतलानि वादयन्तीत्याद्यनुक्त्वा तलान् ( तलानि वा ) ददतीत्येवमाहुः। तथा च भारते प्रयोगः—ततः प्रहसिताः सर्वे तेऽन्योन्यस्य तलान्ददुः ( वन० २३८।२४ )।

उच्चावचं नैकभेदमित्यर्थः। उच्चावचेष्वर्थेषु निपतन्तीति निपाताः ( नि० १।४।२) इति तत्रार्थ उदाहरणम्। उदक् च अवाक् चेत्युच्चावचम् इति पृषोदरादीनि यथोपदिष्टम् ( पा० ६।३।१०९ ) इति सूत्रे वृत्तिः। तत्र मुख्येऽर्थेपि

प्रयोगो भारतस्थः श्रूयताम्—उच्चावचं बलं ज्ञात्वा मध्यस्थं चापि भारत ( वि० २९।१० )। उच्चं राजपुत्रादि। अवचं चण्डालादि। मध्यस्थं वैश्यादीति नीलकण्ठः।

चिच्चनौ निपातौ सर्वनाम्ना किमादिनैव सहचरिताः प्रयोगमवतरन्तीति भ्रमः। अन्यत्रापि दृश्येते—नास्यैतां रात्रिं कुमाराश्चन पयसो लभन्ते ( आप० श्रौ० १।४।११।२ )। कुमाराश्चन कुमारा अपि। तदिदं भाषितं वाक्यं तथाचन तथैव तत् ( भा० उ० ७८।४ )। उतापवक्ता हृदयाविधश्चित् ( वा० सं० ८।२३ )। चिदप्यर्थे।

यमिरुपरमे पठितः संग्रहणे रश्मिप्रग्रहणे सारथ्योपगमेपि प्रचुरं प्रयुज्यते। स्वयं यच्छ हयान्ममेति ( भा० वि० ३६।२० )। यच्छ संगृहाण। अत एव यन्तृशब्दः क्षत्तारमाचष्टे।

आवश्यकार्थे कार्यतरशब्दप्रयोगो भारते, स ग्राह्योऽवहितम्—एवं गते किं कार्यं किं च कार्यतरं नृपाः ( कर्ण० १०।९ )।

अकालिकशब्दस्य विलम्बासहेर्थे प्रयोगो भारते—साम्प्रतं चैव यत्कार्यं तच्च क्षिप्रमकालिकम्। क्रियतां साधु संचिन्त्य··( भा० वि० २७।७ )॥

बलवत्सुष्ठु इति पर्यायौ पठत्यमरः। बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ( शा० १।१ )। सुष्ठु शिक्षितानाम् इत्याह। वसामेहापरां रात्रिं बलवान्मे परिश्रमः ( भा० वि० ५।६। )। बलवान्मेऽध्वखेद इत्यर्थः।

प्राचीनप्रतिचीनशब्दौ विशेषणे नपुंसकैकत्वेपि प्रयुज्येते भिन्नलिङ्ग-वचनेपि विशेष्ये सति। तद्यथा प्राचीनं ग्रामादाम्राः ( भाष्ये )। प्राचीनं हि धिष्ण्येभ्यो देवानां लोकाः प्रतिचीनं मनुष्याणाम् ( गो० ब्रा० उ० २।१७ )।

वशशब्दः स्वतन्त्रा प्रकृतिरायत्तार्थको दृष्टः। कामक्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः ( भा० वन० २०६।३५ )। समासोत्तरपदं तु प्रसिध्यतितराम्—सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ( मनु० ४।१६० )।

अवश इति परवशः परतन्त्र इत्यनेन समानार्थकः प्रचुरं प्रयुज्यते। कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः इति गीतासु ( ३।५ )। स्वतन्त्रेऽर्थेपि प्रयोगो भारते—विशन्ति चावशाः पार्थ योगाद् योगबलान्विताः ( भा० शां० ३००।२४ )। नियते निश्चिते ध्रुवेर्थेपि मुद्राराक्षसे ( ६।६ )—किमस्य भवतो यथा सुहृद एव नाशोऽवशः।

आत्मशब्दः शरीरवचनोपीति न न विदितम्। आध्यात्मिकस्तापः। शारीर इत्यर्थः। श्रीरामायणे व्यक्तमात्मशब्दः शरीरपरः प्रयुक्तः। तद्यथा—नृणां शतानि पञ्चाशद् व्यायतानां महात्मनाम् ( १।६७।४ )। महात्मनां हृष्टपुष्टशरीराणामिति

कतकः । स ददर्श महात्मानं किरीटिनं…। कुम्भकर्णं महाबलम् ( रा० ६।६७।१३६ ) ।। महात्मानं महाकायम् ।

नेदिष्ठ इति समीपतममाहेति नाविदितम् । इनिप्रत्ययान्तस्तु नेदिष्ठिशब्दो न सर्वस्य विदितः, स वेद्यते । यदि दीक्षितानां कश्चित्प्रमीयेत तस्य यो नेदिष्ठी स्यात्तमुपदीक्ष्य ( तां० ब्रा० ९।८।९ ) । नेदिष्ठी निकटो बन्धुः ।

अवारितमित्यनिरुद्धं भवति मुख्यया वृत्त्या । अनारतमविरतमिति तु गौण्या । तथा च प्रयोगाः प्रथन्ते—अवारितम् । अश्रु प्रववृते ( कथा० १३। १२६ ) । निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ( भा० अनु० ६५।६ ) । दीयतां भुज्यतां चेष्टं दिवारात्रमवारितम् ( भा० अनु० २६८६ ) । निरन्तरमनन्तरायमित्यर्थः ।

असङ्गशब्दोऽसङ्गो वै पूरुष इत्यादिषु प्रसिद्धः प्रसिद्धार्थश्च । निष्प्रत्यूहं निरवग्रहमित्यर्थे क्रियाविशेषणं चापि व्यवह्रियते । तद्यथा—विलयमीयुरसङ्गमुपद्रवाः ( अवदा० जा० १०।२७ ) ।

भूतपूर्व इति पूर्वं भूतः पूर्वं यादृशोऽभूदिदानीं ततोऽन्यादृश उच्यते प्रायेण । आढ्यो भूतपूर्वः । इदानीमनाढ्य इत्यर्थः । नष्ट इत्यनेन समानार्थकोपि दृष्टः । बान्धवा भूतपूर्वाश्च तत्र बाले तु का रतिः ( भा० आदि० १५७।२८ ) । भूतपूर्वा नष्टा इत्यर्थः ।

सतत्त्वं हि तत्त्वेन समानार्थम् । सहशब्दोऽनर्थक उपजनः सन्नपि व्यवहारेणाभ्यनुज्ञायते । विदितात्मसतत्त्वस्य नेह नानास्ति किञ्चनेति स्मृतिः ।

अर्थितेत्यर्थिनो भावो भवति । क्वचित्त्वतलावपि कर्मणि दृश्येते । इहार्थितेति प्रयोजनमाह—पप्रच्छागमनेऽर्थिताम् ( भा० आदि० ११२।४ ) ।

अन्तरेणेत्यव्ययं विनार्थे मध्यार्थे च प्रसिद्धम् । मामन्तरेण किन्नु चिन्तयति गुरुः, मद्विषय इत्यर्थः । अश्वस्य मेध्यस्य शिरो निकृत्तं न्यस्तं हविर्धानमिवान्तरेण ( भा० द्रोण० १४३।७१ ) । अत्रान्तरेणेति साक्षान्मध्यवाचि । हविर्गृहस्य मध्येऽभ्यन्तर इत्यर्थः ।

बहुशब्द एकवचनेपि दाशतये—नृम्णानि कृण्वन् बहवे जनाय ( ऋ० १०। १०२।८ ) । बहुभ्यो जनेभ्य इत्यर्थः ।

अनन्तरायमित्यविघ्नं भवति । निरवशेषमप्याह—ये चैवावमा ये च परमा ये च मध्यमास्तान् सर्वाननन्तरायं प्रीणाति ( ऐ० ब्रा० १३।१३ ) । कमप्येकमनवशेष्याऽपरित्यज्येत्यर्थः ।

बन्धनं बन्धो भवति बन्धनस्थानमपि काराख्यम् । बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् ( मनु० ९।२८८ ) । बन्धनानि काराः ।

कृतकृत्यः कृतार्थो भवति यं सिद्धार्थ इत्याहुः। फलवत्प्रवृत्तिः कृतकृत्य इति व्यक्ततरमुच्यते। कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते (भा० वन० १८०।३६)। येषां कर्तव्यं नास्ति नावशिष्यते, शूद्रसधर्माणस्ते भवन्तीत्यर्थ इति नीलकण्ठः।

तदस्य द्वितीयं जन्मेत्यर्थे स यद् यजते तद् द्वितीयं जायते (श० ब्रा० ११।२।१।१) इत्येवमपि व्यवहरन्ति। तस्यां नोऽप्यसत् (श० ब्रा० १२।३।५।१)। तस्यामस्माकमपि भागोस्त्वित्यर्थे वचनम्। भागादिशब्दपरीहारो व्यवहारमनुरुन्ध इत्याहत्यो नः।

गमनीयशब्दव्यवहारोपि शिष्टशीलितोऽवगन्तव्यः। कुण्डलाभ्यां विमुक्तोहं वर्मणा सहजेन च। गमनीयो भविष्यामि शत्रूणां द्विजसत्तम (भा० वन० ३१०।१२)॥ अरीणामासाद्यो भविष्यामि, तद्गोचरे पतिष्यामीत्यर्थः। तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता (शा० १)। विकारेणाक्रान्तास्मीत्याह।

किंशब्दः कुत्सायां प्रथते। स किंसखा साधु न शास्ति योऽधिपम् (कि० १।५)॥ अत्र समासगतः किंशब्दः कुत्सितवचनः, अन्यत्र साक्षात् कुत्सामप्याह। तत्र किं प्रतिभाति मे (भा० वन० २०८।२५)। तत्र जीववधेन प्राप्ये मांसे मे कुत्सा निन्दा प्रतिभाति, ततो जीवान्न हन्मीत्याह।

क्षणिकशब्दः सर्वस्य विदितः क्षणस्थायिवचनः। क्षणिशब्दोप्यस्ति ततो भिन्नार्थः। तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम् (भा० सभा० १३।४५)। क्षणिनं सावसरं निर्व्यापारं स्थितम्।

मनुषीशब्दस्य स्त्रीलिङ्गस्य प्रयोगः शतपथे—तस्मादिमा मनुष्यः स्त्रियस्तिर इवैव पुंसो जिघत्सन्ति इति ह स्माह याज्ञवल्क्यः (श० ब्रा० १।९।२।१२)। मनुष्यजातावुत्पन्ना मनुष्यः।

द्वारे नियुक्तो दौवारिक उच्यते। द्वारमस्यास्ति रक्ष्यमित्यर्थे इन्नन्तो द्वारिशब्दोऽप्यस्ति यस्तात्पर्यतो दौवारिकमाह—द्वारिणं तापसा ऊचू राजानं च प्रकाशय (भा० आदि० १२६।१०)। इत्यत्र भारते यथा।

अन्तरमिति नानार्थम्। एतदधिकृत्य किञ्चिदुक्तमधस्तात्। अन्यत् किञ्चिदुच्यते। अन्तरमन्तरात्मन्यपि वर्तते तद्यथा—इत्यादि मन्त्रिणां वाक्यं न लेभे तस्य चान्तरम् (कथा० ४०।५५)। अन्तरात्मानं न प्राप, हृदयङ्गतं नाभूत्, चेतसि पदं नाकरोदित्यर्थः। छिद्रेपि वर्तते—हनुमतो वेत्ति न राक्षसोऽन्तरम्। न मारुतिस्तस्य च रक्षसोऽन्तरम् (रा०)।

स्वच्छन्दे न वयं स्थिताः (रा० १।३३।३)/ न वयं स्वतन्त्राः।)

अञ्जलिदानं हि परित्यागो भवति। यस्मा अञ्जलिर्दीयते स विसृज्यत इत्याचारः। सूरिभिः संभृतश्रुतैः। नाञ्जलिर्दीयते जातु मानाय च गुणाय च (राजत० ३।१३२)। मानं च गुणं च न कदाचिज्जहतीत्याह।

वंशशब्दो नानार्थः। आह च मेदिनीकरः—वंशः पुंसि कुले वेणौ पृष्ठावयववर्गयोः। तत्र वर्गे समूहेऽर्थे प्रयोगः प्रदर्श्यते—रथवंशेन कदनं शत्रूणां वै करिष्यति (भा० उ० १६४।४)।

उक्तः प्रकीर्णकाधिकरणे शेषः। अन्यत्रापि पूर्वार्द्धे शेष इष्यते वक्तुमिति स उच्यते।

पृ० ५। अस्तिना वाक्योपक्रम इत्यत्रोदाहरणान्तराणीमानि संग्राह्याणि—अस्ति सिंहः...प्रतिवसति स्म (पञ्चत० ४)। अस्त्यत्र नगरे...त्रयः पुरुषा देवस्य श्रियं न सहन्ते (मुद्रा० १, ५)। अस्ति पूर्वमहं व्योमचारी विद्याधरोऽभवम् (कथा० २२।५६)। इहोदाहरणेष्वस्तिरिति प्रतिवसतीत्यादिना नान्वेति आनर्थक्यात्। अस्तीति इदमस्ति एतदस्तीति वाक्यस्यैकदेशः संक्षेपस्य कृते कृतः।

पृ० ९। प्रत्ययमात्रकृतो लिङ्गभेद इत्यस्यापरमुदाहरणं पठ्यताम्—पापा (पापा स्त्री) कृपापात्रतरा न (अवदा० जा० २१)।

पृ० १६। गृधेरकर्मकत्वेऽन्यदुदाहरणमभ्युच्चीयताम्—राज्ये गृध्नन्त्यविद्वांसो ममत्वाहृतचेतसः (वि० पु० ६।७।७)। गृध्नन्ति = गृध्यन्ति।

पृ० १९। कृश्यतेरकर्मकत्व इदमपरमुदाहरणं शातपथम्—मांसान्येव मेद्यतो मेद्यन्ति मांसानि कृश्यतः कृश्यन्ति (११।१।६।३४)।

पृ० २०। जहातेः स्वार्थे णिचीदमपरमुदाहरणं भारतस्थं ग्राह्यम्—शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः (वन० ३७।८)।

पृ० २०। विवक्षातः कारकाणि भवन्तीत्यस्य निदर्शनभूतोऽयमपि शातपथः सन्दर्भः पठ्यताम्— वेत्थ नु त्वं काप्य तत्सूत्रं यस्मिन्नयं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति। वायुना वै गौतम सूत्रेणायं च लोकः परश्च सर्वाणि च भूतानि सन्दृब्धानि भवन्ति (श० ब्रा० १४।६।७।२, ६)। इह वाक्ययोः समानाभिधेये विभक्तिभेदो विवक्षामात्रनिबन्धनः।

पृ० २३। सम्प्रदाने सप्तम्या उदाहरणे इमे अपि संग्राह्ये—नादेयं ब्राह्मणेष्वासीद् यस्य स्वमपि जीवितम् (भा० कर्ण० ९४।४६)। निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे (मनु० ८।१८५)।

पृ० २४। लभेर्ण्यन्तस्य द्विकर्मकत्व इदमुदाहरणान्तरं भारतस्थम्—विजितो बाहुयुद्धेन देहभेदं च लम्भितः (सभा० ४४।११)।

पृ० ३१ । शेषे षष्ठ्या इदमपरमुदाहरणं ब्राह्मणे—तस्माद्य एव पिता पुत्राणां सूर्क्षति स श्रेष्ठो भवति ( गो० ब्रा० उ० ३।९ )। सूर्क्षति आद्रियते।

पृ० ३२ । तृप्तार्थकपदयोगे करणत्वशेषविवक्षायां षष्ठ्या उदाहरणान्तरम्—मधोश्चकानश्चारुर्मदाय ( अथर्व० २।५।१ )। चक तृप्तौ।

आशितस्तृप्त उच्यते तत्प्रयोगेऽपि करणे शेषत्वेन विवक्षिते षष्ठ्या उदाहरणान्तरम्—मेदोमज्जास्थिरक्तानां वसानां च भृशमाशिताः ( भा० सौप्तिक० ८।१३९ )।

पृ० ३३ । उपपदमन्तरेणापि तद्योगशिष्टाया विभक्तेरपरमुदाहरणद्वयमभ्युच्चेतव्यम्—सप्तरात्रादितो नेता यमस्य सदनं प्रति ( भा० आदि० ४।१।१४ )। सप्तरात्राभ्यन्तर इत्यर्थः। आङो मर्यादार्थस्य त्यागः, मर्यादायास्तदन्तराप्यवगतेः। तस्य सप्तरात्रात्तु ब्रह्महत्या भविष्यति (वि० पु० ३।५।३)।

पृ० ३३ । पूर्णशब्दप्रयोगे करणत्वाविवक्षायां शेषे षष्ठ्या अपरमुदाहरणद्वितयम्—भगस्य नावमारोह पूर्णाम् ( अथर्व० २।३६।५ )। बिभ्रत्कमण्डलुं पूर्णममृतस्य समुत्थितः ( वि० पु० १।९।९८ )।

पृ० ३७ । यं कालमारभ्य क्रियाद्यापि प्रवर्तते तत्रारभ्यप्रभृत्यादिप्रयोगाभावे द्वितीयाया व्यवहारस्याभिव्यक्तमुदाहरणान्तरम्—भर्तुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम्। चरामि··( भा० वि० ४५।१४ )॥ अत्रात्यन्तसंयोगे द्वितीया वेदितव्या यथाऽन्यत्र।

पृ० ३८ । वाक्यभेदे सत्यप्यत्यन्तसंयोगे कालात्प्रथमा साध्वी। कः कालस्त्वामन्विष्यामि ( स्वप्न० ३ )। अनत्यन्तसंयोगेऽपि—कः कालो विरचितानि शयनासनानि ( अवि० ३ )। क्तेन क्तवतुना वा क्रियोक्तावपि षष्ठीप्रयोगे तथैव—कः कालस्तस्यैतः प्रस्थितस्य।

पृ० ४० । तिङन्तेन समानप्रकृतिकस्य सविशेषणस्य कर्मणः प्रयोगो न दोषायेति प्रमाणीकुर्वद् उदाहरणान्तरम्—श्रेष्ठं सवं सविता साविषन्नः ( ऋ० १।१६४।२६ )। सर्ववेदाः स येनेष्टो यज्ञः सर्वस्वदक्षिणः ( अमरः )। यष्टुकामो महायज्ञम् (रा० १।५७।१७)। अश्वमेधादयो यज्ञास्त्वयेष्टाः (मार्क० पु० १।५।५४ )। क्वचिद्विशेषणविरहेपि तथाविधं कर्म न विरुन्धन्ति व्यवहारेण विज्ञाः। उषिताः स्मो वने वासं प्रतिकर्म चिकीर्षवः ( भा० वि० ५८।१८ )।

पृ० ४५ । उद्देश्यविधेययोरेकत्वमापादयतोः सर्वनाम्नो लिङ्गविमर्श इदमपरमुदाहरणमौपयिकम्—एतद्वै सर्वं तपो यदनाशकः ( श० ब्रा० ९।५।१।९ )। यच्छब्देनोद्देश्यपरामर्शकेन विधेयस्य लिङ्गग्रहः।

६० ४५। विधेयप्राधान्याद् विधेयस्य लिङ्गग्रहे युक्तमुदाहरणान्तरम्—वृकोदरस्यैष परिग्रहोऽग्र्यः (भा० आश्रम० २५।१२)। परिग्रहः पत्नी।

अत्रापि व्यवहारेऽवधेयम्—वक्तुं नायाति राजेन्द्र एतयोर्नियमस्थयोः। अर्वाङ् निशीथात्परतस्त्वया सार्धं वदिष्यतः (भा० सभा० २१।३३)। एतयोर्वक्तुं नायातीत्यस्मिन्वाक्ये तुमुन्नन्तं वक्तुमिति पदं कर्तृ। वचनं भाषणं नायाति न संभवतीत्यर्थः। कस्य वचनमित्याकाङ्क्षायामाह—एतयोरिति। नियमस्थयोर्व्रतं चरतोः।

चुद संचोदने चुरादिः। संचोदनं प्रेरणं भवति। ततोऽन्यत्र पृच्छायामपि वर्तते। नानार्था हि धातव इति। तद्यथा—किन्तु कार्यगरीयस्त्वात्ततस्त्वामहमचूचुदम् (भा० आदि० ४८।६)। तथा च तद्राजसूत्रे भाष्यकारप्रयोगः—अहमपीदमचोद्यं चोद्य इति।

औपचारिकेषु प्रयोगेषु कतिपयानीमान्यन्तःकरणीयानि प्रयोगान्तराणि स्वस्य बन्धस्य चारुत्वं चिकीर्षद्भिः। यज वीजैः सहस्राक्ष त्रिवर्षपरमोषितैः (भा० आश्व० ९१।१६)। उषितः कृतकालपरिवासः क्वचिदवस्थित उच्यते मुख्यया वृत्त्या, पुराण इति तु गौण्या। चिरोषितोऽगाधजलो जलाशयो ह्रद उच्यत इत्यत्र चेतनधर्मो वासो जलाशय आरोप्यते।

पार्थान्हनिष्यासि समैष भारः (भा० उ० ६२।६)। भारः साध्योऽर्थः। कार्ये भारत्वारोपः। दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम् (भा० द्रोण० ४७।५)। भारो हि वोढारमुपपीडयतीति विषमस्थ आहितभार उच्यते उपचारेण।

निर्ममा निष्प्रतिद्वन्द्वा निर्ह्रीका निष्प्रयोजनाः (भा० अनु० ३१।१८)। निर्ह्रीका इति दिगम्बरा उच्यन्ते। स निर्ह्रीको यस्यापत्रपा नास्ति। नग्नस्याईतस्यापि च सा नास्तीति साधर्म्यान्निर्ह्रीकशब्देन स उच्यते।

आश्चर्यतो वर्षति तत्र देवः (भा० शां० ७३।१५)। आश्चर्यं विस्मयो विस्मयनीयो वार्थ उच्यते। स चानित्यः कादाचित्को भवति। अत एवाचार्येण आश्चर्यमनित्ये (६।१।१४७) इति सूत्रेणानित्येऽर्थे आश्चर्यमिति निपातितम्। विस्मयो भवतु मा वा भूद्यत्कदाचिदेव भवति तदाश्चर्यमित्युच्यते। तथा च प्रकृते प्रयोगः।

अस्ताभिलाषिणि दिने (राजत० ८।४६५)। प्रवाताभिलाषी प्रदोषः (राजत० ८।४६७)। इहोभयत्र प्रयोगे इच्छारूपश्चेतनधर्मो दिने प्रदोषे चारोपितः। अयमेवोपचारः। अस्तंगतप्राये सवितरि, वास्यन्मन्दसमीरं रजनीमुखम् इत्यर्थः।

क्लिष्टो हि मुख्यया वृत्त्याऽऽर्त उच्यते यश्च ग्लानो मलिनश्च लक्ष्यते । तत्साधर्म्यादक्लिष्टोऽप्यनार्तोपि मलिनो मलदूषितः क्लिष्ट इत्युच्यत उपचारात् । न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः ( सुश्रुते २।१५७।८ ) ।

करोतिना सर्वधात्वर्थानुवादः क्रियत इत्यधिकृत्य शास्त्रौघात्संकलितैरुदाहरणैः करोतेरर्थनानात्वं सम्यक् स्फोरितम् । तथापि कालान्तरे समुपलब्धान्युदाहरणान्तराणि कतिपयानीह संनिधाप्यन्ते—

तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ( रा० १।१९।१९ ) । मा कृथाः = मा आधिथाः । मा स्म शोके मनः कृथाः ( रा० ३।६१।१९ ) । उक्तोऽर्थः । अवरं स्वाहाकारं करोति परां देवताम् (श० ब्रा० १४।१।३।२६) । पूर्वं स्वाहेति पठति ततो देवतानामधेयमुच्चारयतीत्यर्थः । इह करोतिरुच्चारणे वर्तते । यन्तुर्वाक्यकरैर्हयैः (भा० द्रोण० ३७।२२) । इह करोतिरनुवर्तने वर्तते । उपाध्यायमधः कृत्वा ( भा० अनु० ९३।२३ ) । इह करोतिरासने उपवेशने वर्तते । अकरोत्स ततः कालं शरतल्पगतो मुनिः ( भा० आश्व० ६०।१२ ) । अकरोत् अक्षपयत्, अनयत् । ततोऽस्याः स्वागतं कृत्वा व्यादिश्य च वरासनम् ( भा० शां० ३२०।१४ ) । अत्र करोतिर्व्याहरणे वर्तते ॥

इति प्रथमोऽनुबन्धः ।

## अथ द्वितीयोऽनुबन्धः ।

पर्यायवचनानि कानिचिदिह पूर्वार्द्धेऽनुक्रान्तानि व्याकृतानि च । तावद्भिरपरितुष्यन्तो वयमपराण्यभ्युच्चिन्मोऽल्पानि ।

योधास्ते महाराजन्क्रोधामर्षसमन्विताः ( भा० द्रोण० १८७।४० ) । ततो दुर्योधनस्यासीन्नकुलेन समागमः । अमर्षितेन क्रुद्धस्य क्रुद्धेनामर्षितस्य च ( भा० द्रोण० १८७।५० ) । अत्र दुरन्वयो विशेषः । यदुक्तं पुरस्तात् क्रोधः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुत इति तदिहाप्यवितथं भाति ।

उपायनप्राभृते तुल्याभिधेये मते । तत्रापि विशेषोस्ति । स उच्यते । उपायनं ढौकनिका स्वयमानीयते । प्राभृतं कौशलिका सखिभिः प्रहीयत इति सङ्केतकृच्छङ्करः ( हर्ष० ३ ) ।

कीर्तिर्यश इति पर्यायौ । कीर्तिविषये नाना पश्यन्ति व्याख्याकाराः । मृतस्य ख्यातिः कीर्तिरिति यत्कुल्लूकेनोक्तं तद्भारतवचनेन समर्थनां लभते इति तदुपन्यस्यामः—मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः (वन० २०१।७) । अन्यत्र भारते ( आदि० २०३।१० ) जीवतः प्रख्यातिः कीर्तिरित्यभिप्रायकं वचो लभ्यते—नष्टकीर्तेर्मनुष्यस्य जीवितं ह्यफलं स्मृतम् इति । तेनात्र विषये प्रयोक्तारो व्याख्यातारश्च समं व्यामुग्धा इति सुवचम् ।

अद्यत्वे बाणविशिखौ पर्यायता गतौ दृश्येते । पुरा विशिख इति बाणविशेषणमभूदिति निदर्श्यते—ससर्ज बाणान् विशिखान्महात्मा ( भा० कर्ण० ८५।२६ ) ।

प्रीतिहर्षावधिकृत्य किञ्चिदुक्तमधस्तात् । भूयोपि प्रीतिहर्षानन्दान्यथा भारतभावदीपं प्रविविञ्च्महे । प्रहर्षः प्रीतिरानन्दस्त्रयस्ते सात्त्विका गुणाः ( भा० आश्व० ३१।१ ) । इष्टप्राप्तिनिश्चये यत्सुखं तत्प्रहर्षः । इष्टप्राप्तौ यत्तत्प्रीतिः । इष्टभोगे यत्तदानन्द इति नीलकण्ठः । संयुक्ताः काममन्युभ्यां क्रोधहर्षसमञ्जसाः ( भा० शां० ७।२० । इत्यत्र हर्षो लाभे सत्युत्फुल्लतेति च सः । यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजोत्तमौ ( रा० २।३।२२ ) । प्रीतिर्मनस आनन्दः । तदुन्नायको नखविकासादिर्हर्ष इति तिलकः । गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः / रा० १.७७।५ ) । हर्षस्याधिकावस्था प्रमोद इति च सः ।

अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् इत्यमरे पर्यायाः परिपठिताः । सान्तरा इमे । अदूरविप्रकर्षात्तु पर्यायत्वम् । तुषारनीहारवृतं यथा नभः ( भा०

कर्ण० ८९।९३ )। अत्र तुषारनीहारयोः समभिव्याहारात् पर्यायत्वं विघटते। तुषारः सूक्ष्माः पयोदपृषताः। नीहारो हिमावरणम्।

नगौकोवाजिविकिरविष्किरपतत्त्रय इति पक्षिपर्यायेष्वमरः। तेन तस्य विकिरविष्किरौ पर्यायावभिमतौ। संकुसुको विकुसुको विकिरो यश्च विष्किरः। मापाज्येन नलेध्मेन क्रव्यादं शमयामसि ( ) इत्यत्र युगपत्पाठान्नैतौ पर्यायावित्यवसायः।

सरस्तटाकौ पर्यायाविति लोकः प्रतिपन्नः, परमिमावपि नात्यन्ताय निर्विशेषौ। कौटलीयेऽर्थशास्त्र एतयोः सम्पाठदर्शनात्—ह्रदस्य बाऽविशेषस्याङ्के सरसस्तटाकस्य वा पण्यपुटभेदनमंसवारिपथाभ्युपेतं ''कारयेत् ( २।२।२१ )। तत्र ह्रदस्तु सदाजलोऽगाधजलो वेति प्रसिद्धः। तटाक इह पद्माकरवचनः। सरःशब्दो जलाशयसामान्यमाह। तटाकविषये शब्दार्थचिन्तामणाविदं स्थितम्— प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः। जलाशयस्तडागः स्यादित्याहुः शास्त्रकोविदाः॥

यवागूरुष्णिका श्राणा विलेपी तरला च सेत्यमरः पठति। अस्ति चैषां विशेषः। आह च—सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता। विलेपी बहुसिक्था स्याद् यवागूर्विरलद्रवा॥इति।

उल्वजरायू पर्यायाविति विभ्रमन्ति केचित्। यथा उल्वमित्यनवगमः, जरायु इत्यवगमः ( नि० ६।३५ )। इति दुर्गः। तन्न। उत्तरं वा उल्वाज्जरायु इत्यैतरेये ( ऐ० ब्रा० १।३ ) भेदस्य स्फुटमुक्तत्वात्। भेदे प्रयोगश्च—मेरुरुल्वमभूत्तस्य जरायुश्च महीधराः ( अमरटीकायां सर्वानन्दः )। षड्गुरुशिष्योपि स्फुटतरं भेदमेतयोराह—उल्वेन वेष्टितो गर्भस्तज्जराय्वभिवेष्टितम् इति। शतपथे ( ३।२।१।११ ) अन्तरं वा उल्वं जरायुणो भवतीत्यत्र व्यक्ततरो भेदः।

दर्विः कम्बिः खजाका चेत्यमरे पाठः। खजां च दर्विं च करेण धारयन् ( भा० वि० ८।१ ) इति खजादर्व्योः सम्पाठदर्शनान्नैते अत्यन्तमेकार्थिके। इत्थं च ते भिनत्ति नीलकण्ठः—खजा मन्थनदण्डः, हस्ताकारः पिष्टविकारप्रमथनार्थो वा दण्डः। दर्वी शाकादिपरिवेषणार्था। व्यञ्जनाद्यवघट्टनकाष्ठम्। सूपादिपरिवेषणार्था लौहमयी खजा। कटाहादन्ननिःसारणार्था दर्वीति भेद इत्यर्जुनमिश्रः।

दीप्तिकान्त्यादिविषये किञ्चिदुक्तमधस्तात्। तत्र दर्पणकारस्य कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ( सा० द० ३।१३१ ) इति वचोपि भेदनिर्ज्ञानाय ग्राह्यम्।

रोषक्रोधौ विविञ्चद्भिरस्माभिः किञ्चिदुक्तं तत्रोज्ज्वलाकारस्य हरदत्तमिश्रस्य वच उपकारकमादेयम्—रोषः क्रोधस्यैव कियानपि भेदो मित्रादिषु प्रतिकूलेषु मनसो वैलोम्यमात्रकार्यकरः ( आप० ध० १।२३।५ )।

अश्रुबाष्पयोर्भेदमधिकृत्य यदुक्तमधस्तात्तत्रेदं भूयो वेद्यम्। श्रीरामायणेऽन्यत्रैतयोरभेदेनापि प्रयोगः श्रितः—कौसल्या ह्यसृजबाष्पं प्रणालीव नवोदकम् ( २।६२।१० )।

असुप्राणयोर्भेदमभ्युपयन्त्यृषयः। तथा चाथर्वसंहितायां शौनकीयाः पठन्ति—प्राण प्राणं त्रायस्वासो असवे मृड ( अथर्व० १९।४४।४ )।

तन्द्रालस्ये पर्यायाविति प्रतिपन्नप्रायम्। याज्ञवल्क्ये ( ३।१५८ ) तन्द्रालस्यवर्जनमिति स्मर्यते। अवश्यं भेदोभिप्रेतः स्मृतिकारस्य। शब्दस्पर्शादिविषयेषु श्रोत्रादीन्द्रियाणां प्रवृत्तिनिरोधस्तन्द्रा निद्रानुकारिणी। आलस्यमनुत्साह इति मिताक्षरायां स भेद उक्तः।

मार्गाध्वपन्थानोऽमरे पर्यायाः परिपठिताः। परं दाशतये साहचर्येण पाठात्पथ्यध्वनोर्भेदो वसीयते। वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा अग्ने यज्ञेषु सुक्रतो ( ऋ० ६।१६।३ )। तत्राध्वनो महामार्गान्, पथः क्षुद्रमार्गानित्येवं भेदं व्यनक्ति सायणः।

वर्तनिपन्थानावपि भिद्येते। भेजे पथो वर्तनिं पत्यमानः ( ऋ० ७।१८।१६ )। वर्तनिः पलायनमार्ग इति सायणः।

स्युर्मौहूर्त्तिकमौहूर्तज्ञानिकार्त्तान्तिका इत्यमरे दैवज्ञपर्यायाः पठिताः। तेषां कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः ( कौ० अ० १।१३।९ )। कार्तान्तिकादीनां मिथो भेदमित्थमुद्भावयति गणपतिः शास्त्री—कृतान्तो दैवं पूर्वकर्म तद्वेदिनः कार्तान्तिकाः। शुभाशुभशकुनज्ञा नैमित्तिकाः। त्रिकालवृत्तज्ञा मौहूर्तिकाः।

कोपक्रोधौ विवेचितौ। तत्र ततः कोपसमाविष्टो विश्वामित्रो महामुनिः। सुवमुद्यम्य सक्रोधः…( रा० १।६०।१२ ) इति रामायणीयं वचनं व्याचक्षाणस्तिलककार आह—कोपस्यैवाधिकावस्था क्रोधः। तदिदमुक्तपूर्वस्योपोद्बलकम्।

गर्वाभिमानादिविषये किंचिदुक्तमधस्तात्। अभिमानविषये इदमधिकं ज्ञेयम्—अभिमानो नामात्मन्यविद्यमानगुणारोप इति।

सभासमाजौ पर्यायाविति सम्प्रतिपन्नो लोकः। तावपि सान्तरौ। सभाः समाजांश्चागन्ता ( आप० ध० १।१।३।१२ )। द्यूतादिस्थानं सभा, उत्सवादिषु समवायः समाज इति हरदत्तष्टीकाकारः।

वनकानने अपि भिन्नार्थके। ततो वह्वन्यपश्येतां काननानि वनानि च (हरि० २।२८।७०)। काननान्यरोपितवृक्षाणि। वनानि रोपितवृक्षाणीति नीलकण्ठः।

श्रेणिगणयोर्भेदः। श्रेणीनां च गणानां च मह्या भान्त्यचलोपमाः (हरि० २।२९।५)। श्रेणीनामनेकजातीनामप्येकशिल्पोपजीविनाम्। गणानामेकजातीनाम् इति नीलकण्ठः।

प्रोक्षणाभ्युक्षणावोक्षणानि भिद्यन्ते। तथा च गृह्यासङ्ग्रहे भाष्ये (१।१०३) प्रोक्षणादय इत्थं विविच्यन्ते—उत्तानेनैव हस्तेन प्रोक्षणं समुदाहृतम्। न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चाऽवोक्षणं मतम्॥इति।

विवाहश्चोद्वाहश्चैकार्थाविति प्रायोवादः। विशिष्येते ह्येतौ। कन्यासंस्कारो विवाहः। वरसंस्कार उद्वाहः (लौ० गृ० २५।१९ इत्यत्र देवपालः)।

अस्ति पताकाध्वजयोर्भेदः। श्रीमद्भागवते चित्रध्वजपताकाग्रैरन्तः प्रतिहतातपम् (१।११।१३)।अत्रोभयोः साहचर्येण पाठः पर्यायत्वं वारयति। गरुडादिचिह्निता ध्वजाः। जयप्रदयन्त्राङ्किताः पताका इति श्रीधरः। पताका वैजयन्ती स्यादिति ब्रुवन्नमरोप्यत्रानुकूलः।

स्युर्मागधास्तु मगधा वन्दिनः स्तुतिपाठका इत्यमरे पाठः। चत्वार एकार्था इत्येक इति स्वामी। नटनर्तकगन्धर्वाः सूतमागधवन्दिनः (भा० पु० १।११।२०)। तत्रैतानित्थं विविनक्ति श्रीधरः—सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः। वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः॥ इति।

उपसर्गमात्रेण भिन्नावृद्धिसमृद्धिशब्दौ कलया भिन्नार्थाविति हरिवंशे—ऋद्धिं समृद्धिं विपुलांश्च भोगान् (१।४१।१७४) इति सम्पाठाद् व्यक्तिमेति। अयं चानयोर्भेदो नीलकण्ठोद्भावितः—ऋद्धिर्धर्मफलभूता सम्पत्तिः। समृद्धिर्योगैश्वर्यम् इति।

भेषजौषधे समानार्थे अभिमते भिद्येते नाम। औषधं द्रव्यसंयोगं ब्रुवते दीपनादिकम्। हुतव्रततपोदानं शान्तिकर्म च भेषजम्॥ (का० सं० इन्द्रिय० औषध० श्लो० ४)।

कर्तनच्छेदने नात्यन्तायाभिन्ने। केशरोमनखश्मश्रु न च्छिन्द्यान्नापि कर्तयेत्। (ल० वि० स्मृ० ३।१०)। अत्रोभयोः साहचर्येणोक्तिरभेदं वारयति। कर्तनं विकर्तनमग्रभागस्यापनयनम् भवति। छेदनं तु लुञ्चनं मूलत उद्धरणम्।

अपवर्गमुक्ती नानार्थे। अपवर्गश्च युक्तानां कैवल्यं चात्मवेदिनाम् (भा० अनु० १६।३६)। इत्यत्र भेदेनोपादानात्। अपवर्गः क्रममुक्तिस्थानं ब्रह्मलोकाख्यम्। कैवल्यं मुख्या मुक्तिरिति नीलकण्ठः।

नागपन्नगौ भिन्नार्थौ। सुरसाऽजनयन्नागान् राम कद्रूश्च पन्नगान् ( रा० ३।१४।२८ ) इत्यत्रोभयोः साहचर्यात्। तत्रेत्थं भेदमुद्भावयति कतकः—निर्विषा नागास्तदन्ये पन्नगा इति। नागा बहुफणाः सर्पाः, तदन्ये पन्नगा इति तु तीर्थः।

उद्देश-निर्देशावपि मिथो विशिष्येते। आह च कौटल्यः—समासवाक्य-मुद्देशः। विद्याविनयहेतुरिन्द्रियजयः। व्यासवाक्यं निर्देशः। कर्णत्वगक्षि-जिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वप्रतिपत्तिरिन्द्रियजयः ( कौ० अ० १५।१।१८० )।

आधोरणहस्तिपकौ समानार्थौ न। चिकित्सकानीकस्थारोहकाधोरणहस्ति-पकौपचारिक···औपस्थायिकवर्ग ( कौ० अ० २।३२।४८ )। इत्यत्र तयोः समभिव्याहारात्। आधोरणः शास्त्राभिज्ञः कर्मकुशलः। हस्तिपको हस्तिरक्षी इति गणपतिः शास्त्री।

विधेयो विनयग्राही···वश्यः प्रणेय···इत्यादयः समा इत्युक्तममरेण। श्रीरामायणे तु स्वं तस्य भव वश्यश्च विधेयश्च सदाऽनघ ( २।३०।९ ) इति पाठो विधेयवश्ययोर्भेदं ब्रवीति। वश्य इष्टानुवर्ती। विधेयो नियोज्य इति तिलकः। वश इच्छा तं गतो वश्य इति व्युत्पत्तिरपि रूढमर्थं समर्थयते।

क्वचिच्छिष्यान्तेवासिनोर्भेदेनोपादानम्। याज्ञवल्क्ये व्यवहाराध्याये अभ्युपेत्य-शुश्रूषाप्रकरणोपक्रमे मिताक्षरायां शिष्यान्तेवासिभृतका इति नारदवचन-मुद्धृतम्। तत्र शिष्यो वेदविद्यार्थी। अन्तेवासी शिल्पशिक्षार्थीति विज्ञानेश्वरो व्याख्याति।

कूटकपटे भिन्ने। साटोपकूटकपटानृतजन्मभूमेरिति ( मृच्छ० ५।३६ )। इत्यत्र स्थितम्। तत्र टीकाकार आह—निह्नवप्राकट्यभेदात्कूटकपटयोर्भेद इति। निह्नुतं छलं कूटं प्रकटं छलं कपटमिति तदर्थः।

निक्षेपोपनिधी अपि भिद्येते कयापि कलयेति प्रदर्श्यते। असंख्यातमविज्ञातं समुद्रं यन्निधीयते। तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः॥ इति नारद-वचनमुद्धृतं मिताक्षरायाम् (२।६५)। वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते। द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्॥ इति वचनान्तरमपि तत्रोपन्यस्तम्।

सदः सत्परिषदौ सभा च भिद्यन्ते परस्परम्। न तत्सदः सत्परित्सभा च सा ( भा० शां० २२६।१८ )। अत्र सदआदीनां सहपाठ एव तत्र मानम्। अयमत्र विवेको नीलकण्ठप्रवर्तितः—श्रौतस्मार्तलौकिकन्यायान्याय-विवेचका जनसमाजाः सदःपरिषत्समाख्या इति।

पापपाप्मानौ समानार्थाविति भ्रान्त्या साङ्कर्येण प्रयुज्येते। एवमाप्त्वा विपापो विपाप्मा सर्वमेनो हन्ति ( गौ० ध० ३।९।१६ ) इत्यत्रैकवाक्ये तयोः

पाठादर्थभेदोऽनपलाप्यः। विहिताकरणजन्यपापहीनो विपापः, निषिद्धाचरणजन्यपापहीनो त्रिपाप्मेत्युज्ज्वलायां हरदत्तः।

चालनी तितउः पुमान् इत्यमरानुसारेण चालनीतितऊ पर्यायौ। तन्न। अस्ति विशेषस्तयोः। क्षुद्रच्छिद्रसमोपेतं चालनं तितउः स्मृतमिति कात्य इति शब्दार्थचिन्तामणिः।

भुजिष्य इति दासार्थे पठितोऽमरेण। परं भुजिष्या सामान्या दासी न भवति याज्ञवल्क्ये ( २।२९० ) तयोः पार्थक्येनोपादानात्। अवरुद्धासु दासीषु भुजिष्यासु तथैव चेति तत्र स्मर्यते। पुरुषनियतपरिग्रहा भुजिष्या इति मिताक्षरा।

शुक्तरूक्षपरुषाः समानाभिधेया नेति तेषां शुक्ता रूक्षाः परुषा वाचो न ब्रूयादित्यत्र (बौ० २।३।६।२०) वाग्विशेषणत्वेन श्रवणात्। शुक्ताः शोककारिण्यः, यथाऽविधवां विधवेति, रूक्षा अविद्यमाने दोषे दोषख्यापिकाः, यथा श्रोत्रियं सन्तमश्रोत्रिय इति। परुषास्तु विद्यमाने दोषे गुणख्यापिकाः, यथाऽन्धं चक्षुष्मानिति इति गोविन्दस्वामी।

सभासंसदौ मिथो भिन्नौ। दासोस्मीति त्वया वाच्यं संसत्सु च सभासु च ( भा० वि० ३३।५९ ) इत्यत्र भेदेन श्रवणात्। संसद् गोष्ठी। सभा राजसभेत्यर्जुनमिश्रः।

सक्त्यभिष्वङ्गयोरपि भेदः स्थितः। गीतासु ( १३।९ ) असक्तिरनभिष्वङ्गः पुत्रदारगृहादिष्विति पठ्यते। तत्र सक्तिः पुत्रादौ ममतातिमात्रम्। अभिष्वङ्गस्तेन सह तादात्म्याभिमानोऽयमेवाहमितीत्येवं नीलकण्ठ एतयोर्भेदं निर्वक्ति।

मेघपर्जन्यावसङ्करेण स्थितौ साहित्ये। गर्जितेन च मेघानां पर्जन्यनिनदेन च ( हरि० २।१८।१९ ) इत्यत्रोभयोः पार्थक्येन श्रवणात्। ऋग्वेदे ( ४।२७।२ ) यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः इत्यत्र पर्जन्यस्तननेन दुष्कृतां हननं श्रूयते तेनावसीयते पर्जन्यः स्तनयित्नुर्ह्रादिनीयुक्तो मेघोऽभिधीयत इति।

पर्णशालोटजोऽस्त्रियामित्यमरे पर्यायौ। श्रीरामायणे ( २।९९।४ )। भ्रातुः पर्णकुटीं श्रीमानुटजं च ददर्श ह इत्यत्र पर्णकुट्या उटजस्य च युगपत्पाठः पर्यायत्वं विहन्ति। एवं हि तयोर्भेदमुद्भावयति रामस्तिलककारः—पर्णप्राधान्येन निर्मिता कुटी शाला पर्णकुटी। उटजं समित्तिकवाटं दारुबद्धं गृहम्।

कारुः शिल्पीत्यभेदं मन्यते जनः। अस्तीह भेद इति मिताक्षरायां (३।२७) समुद्धृतेन कारवः शिल्पिनो वैद्या दासीदासास्तथैवेति प्रचेतोवचनेनोन्नीयते। तत्र कारवः सूपकारादयः। शिल्पिनश्चित्रकारचैलनिर्णेजकादय इति ज्ञानेश्वरः।

सूतक्षत्तृसंग्रहीतारः समानाभिधेयाः प्रसिद्धाः। पञ्चविंशे ब्राह्मणे (१९।१।४) अष्टौ वै राष्ट्रं समुद्यच्छन्ति राजभ्राता च राजपुत्रश्च पुरोहितश्च महिषी च सूतश्च

ग्रामणी च क्षत्ता च सङ्ग्रहीता चेत्यत्रैते साकं श्रूयन्ते तेनेमे नानाभिधेयाः सिध्यन्ति।

तीक्ष्णनिशितावपि भिद्येते। सायकेन सुपीतेन तीक्ष्णेन निशितेन च (भा० भीष्म० ४५।४८) इत्यत्रैतयोः सहपाठः पर्यायत्वं विघटयति। यः शाणोल्लीढः संस्तीक्ष्णः संजातः स निशितः, अन्यस्तीक्ष्णः।

अभितापसन्तापावपि भिद्येते। तथा हि भेदपरस्तयोः प्रयोगः श्रीरामायणे (२।१८।१३)—शारीरो मानसो वापि कच्चिदेनं न बाधते। सन्तापो वाऽभितापो वा दुर्लभं हि सदा सुखम्॥ मूलेनैव विशेष उक्त इति नार्थो व्याक्रियया।

कालान्तकयमाः पर्याया अभिमताः। परं नैतदस्ति। सान्तरा इमे। एकत्र सहप्रयोगदर्शनात्। विराधे राक्षसे तस्मिन् कालान्तकयमोपमे (रा० ३।३।१५)। इत्थमत्र विशेषं वक्ति तिलककारः—प्राणतनुमनःसंहारप्रधानाः संहाररुद्रस्य मूर्त्तयः। तत्सदृशे।

अङ्गदकेयूरयोर्विशेष उक्तः। तत्रोदाहरणान्तरं भारतस्थमुपन्यस्यते—अङ्गदैः पारिहार्यैश्च केयूरैश्च विभूषितान् (उ० १६२।१६)। पारिहार्यं आवापकः कटकः।

निधिशेवधी पर्यायौ मतौ। पठति ह्यमरः—निधिर्ना शेवधिरिति। परमाथर्वणे (१२।३।४६) एतयोः साहचर्येण पाठात्सविशेषाविमावित्यवधारयामः। निधिर्न्यासो भवति शेवधिश्च भाण्डागारं कोषो वा।

वातपवमानमातरिश्वानः पर्याया अभिमताः। परमेते मिथो भिद्यन्ते समभिव्याहारदर्शनात्। मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथिः (अथर्व० १५।२।७)। मातरिश्वेति वायुसामान्यं गृह्यते। यः शोधकोऽभिप्रेतः स पवमान उच्यते। वेगेन वान्स एव वातो व्यपदिश्यते।

शकुनशकुनिशकुन्ताः पक्षिणा समानाभिधेया अभिमताः। शकुन्तान् पक्षिणो ब्रूमः (अथर्व० ११।८।८) इत्यत्र शकुन्तान् शकुनभूतान् इत्येवमर्थापयते सायणः।

ह्रीलज्जे समानार्थे इत्यभिमानः। भिद्येते ते परस्परम्। क्रोधाद्ध्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत् (भा० वन० ९४।८)। अत्राह नीलकण्ठः—अह्रीः अकार्ये प्रवृत्तिः। ततोऽलज्जा लज्जा निन्द्यतादोषाद्भयं तस्य नाश इति।

क्वचित्समानार्थकानामेकत्र श्रवणे समादरं हेतुं पश्यन्ति विवरीतारो न च तान्भेत्तुं प्रयस्यन्ति। तदपि विमर्शमर्हति। याभिः सोमो मोदते हर्षते च (ऋ० १०।३०।५)। पुनरुक्तिरादरार्थेति सायणः। समर्थमेकं पर्याप्तं कौरवाणां

विनिग्रहे ( भा० उ० ५७।५३ )। समर्थादयः पर्यायाः। सहप्रयोगस्तु सामर्थ्यातिशयद्योतनायेति नीलकण्ठः। अस्ति सूक्ष्मो भेदः, तद्विभावनेऽविभवस्तेषामित्येवाचरमः पक्षः।

वीणावल्लकीविपञ्च्यः पर्यायाः पठिता अमरेण। भारते ( अनु० ७९।२६ ) वीणानां वल्लकीनां चेति साहचर्येण पाठदर्शनान्नियतं भिन्नार्था इमाः। भेदं तु सङ्गीतेऽभ्यन्तरा विद्युः।

किरीटमुकुटे तुल्यार्थके अभिमते। इदमपि चिन्त्यम्। अनेकत्र साहित्य एतयोः सम्पाटदर्शनान्नैते अत्यन्तमभिन्नार्थे इत्यवधारयामः। हारैः किरीटैर्मुकुटैरुष्णीषैः किङ्किणीगणैः ( भा० द्रो० १८७।४८ )। किरीटमाला मुकुटाश्च शुभ्राः ( भा० कर्ण० ९४।१९ )। किरीटापीडमुकुटैरङ्गदैरपि मण्डिताः ( हरि० २।८४।१४ )। किरीटी वज्रधृग्धन्वी मुकुटी बद्धकुण्डलः (भा०अनु० ४०।२९)। अत्र विवरीतारस्तूष्णीकामासते, वयमपि प्रमाणविरहे नेश्महे किमपि वक्तुमिति विरमामः॥

इति पर्यायवचनविवेकेऽनुबन्धः॥

यद्वशे वर्तते नित्यं यदिङ्गं यच्च नेङ्गति।
यद्भासा भासते विश्वं केतपूर्वश्च कीर्त्यते॥१॥
यत्प्रसादात्प्रसिध्यन्ति कर्माणि दुष्कराण्यपि।
तस्मिन्महेश्वरे प्रह्वः कृतिमेतां समर्पये॥२॥ ( युग्मम् )
कृत्यामास्वादमास्वादमेतस्यां वर्तनिं नवाम्।
नवार्थस्यातिसन्तृप्ताः सम्प्रेष्यन्ते विपश्चितः॥३॥
इति प्रत्यथितो याचे प्रश्रितस्तान् विमत्सरान्।
सानुग्रहं प्रवृत्तास्ते विमृशन्तु क्रियामिमाम्॥४॥
तावताऽऽकलयिष्येहं कृतितामात्मनः पराम्।
विमर्शो लब्धवर्णानां यतस्तोषं प्रसूयते॥५॥

इति श्रीचारुदेवशास्त्रिणः कृतिषु वाग्व्यवहारादर्शो नामाऽयङ्ग्रन्थः समाप्तिमापत्।

शुभं भूयादध्यायकानामध्यापकानां च॥

---

# अशुद्धशोधनं परिबृंहणं च

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १२ | नरेश्वरेति | नरेश्वर इति |
| ,, | ,, | १९।१२ | १३७।१७ |
| ९ | ९ | पश्चाच्छावाक | पश्चादच्छावाक |
| १५ | २१ | दूवे | दूये |
| २५ | १२ | युञ्चतेः | मुञ्चतेः |
| ३९ | १३ | मुनेः (सभा०) | मुने (आदि० १७७।१५) |
| ६० | ३० | गिरन् | गृणन् |
| ७७ | १२ | व्यमूव्या | व्याख्या |
| ७८ | १९ | २१९९।२ | २१९९।३९ |

वृषु सेचने इति धातुरुपचारेण पोषणेपि वर्तते। तथा च भारते (शां० २३८।१८) प्रयोगः—यथा सर्वाणि भूतानि वृष्टिर्भौमानि वर्षति।

ण्यन्तस्य वृतेः प्रयोगेपूक्तपूर्वेष्वयमप्यन्तः करणीयो दाशतये प्रयोगः—प्रतिब्रवाणि वर्तयते अश्रु (ऋ० १०।९५।१३। वर्तयते मुञ्चते।

रथः स्यन्दन इति सर्वस्य विदितोऽर्थः। सूर्यमाधत्थो दिवि चित्र्यं रथम् (ऋ० ५।६३।७)। परि यत्कविः काव्या भरते शूरो न रथो भुवनानि विश्वा (ऋ० ९।९४।३)। इह रथो रथस्य प्राजितोक्तः। एवमेते रथाः सप्त राजन्नन्यान्निबोध मे (भा० सभा० १४।५८)। अत्र रथो योध इत्यनर्थान्तरम्। अत एव महारथो महायोध उच्यते। मनोरथशब्दे रथशब्दो रते रमणस्य वाचकः। अयमेवार्थ आथर्वणश्रुतौ—रथजितां राथजितेयीनामप्सरसाम् (६।१३०।१)।

केनायं मत्तः श्रेयानित्यर्थे सोऽयं कस्मादतीव मामिति (भा० शां० ९८। १०) श्रेयान्व्यवहारः श्रेयः।

अनन्तरशब्दविषय इदमतिरिक्तं वेद्यम्—प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च (भा० वन० २०९।४३)। अनन्तरा संनिहिता सुलभेत्यर्थः।

अनुपसृष्टोपि वचिर्निन्दायां दृश्यत इत्यत्र निदर्शनान्तरे—वृत्तिविज्ञानवान्धीरः कस्तं वा वक्तुमर्हति (भा० शां० १३२।६)। वक्तव्या मारिषान्ये तु न वक्तव्यास्तु मादृशाः (भा० कर्ण० ४९।५७)।

शक विभाषितो मर्षण इति दिवादिः सकर्मकः। मर्षणमिह प्रसहनम्। न वाक्यमात्रेण वयं हि शक्याः (भा० वन० २६८।१२)। शक्याः प्रसह्याः, अभिभवनीयाः। न ह्युपायेन ते शक्याः पाण्डवाः कुरुवर्धन (भा० आदि० २०२।१)। शक्या अभिभवनीयाः, वशे कार्याः।

अर्पयतेरनुपसृष्टस्य सोपसर्गस्य वा व्यधनमर्थ इत्यत्र पुष्कलं प्रमाणान्तरम्—इदं धनुर्लक्ष्यमिमे च बाणाः शृण्वन्तु मे नृपतयः समेताः। छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शितैर्व्योमचरैर्दशार्धैः (भा० आदि० १८५।३५)।

गन्धशब्दो बह्वर्थः। अस्ति योल्पवचनः। घृतगन्धि भोजनम्। अस्ति यो गर्वे वर्तते। केनात्तगन्धो माणवकः। अभिभूत इत्यर्थः। अस्ति यो बन्धुत्वे सम्बन्धे वा वर्तते। सर्वः सगन्धेषु विश्वसिति। मात्रेऽर्थेपि भाष्ये प्रयुक्त इति वेदनीयं सुधीभिः—यावान्व्याकरणे पदगन्धोस्ति (पा० २।१।१ )। यावता चेदानीं पदगन्धोस्ति पदविधिरयं भवति (पा० ३।१।९२)।

ऋषेस्तस्योटजस्थस्य कालोऽगच्छन्निशानिशम् (भा० शां० ११७।६)। निशानिशं बहुरात्रम्। एकशेषे कर्तव्ये द्वन्द्वः कृत इति व्यवहारः प्रधानम्।

भारद्वाजश्रौतसूत्रे (६।९।१) ऽनुजावर इति पदं पितरि प्रेते योऽनुजातः पुत्रस्तत्रार्थे प्रयुक्तम्।

तिष्ठतेः प्रयोगेपूक्तपूर्वेष्विदमपि प्रयोगद्वितयमन्तःकरणीयम्—अपश्यतां प्रियान्पुत्रांस्तेषां शोको न तिष्ठति (भा० शां० १५३।२५)। न तिष्ठति न विरमति। तिसृणां वसतीनां स्थानं परमदुष्करम् (भा० वन० २९६।५)। भोजनत्रयनिरोध इत्यर्थः।

यत्राद्यत्वे प्रायेण समयो मे नास्तीति व्यवहरन्ति तत्र व्यवहारविशारदाः पूर्वे क्षणो मे नास्तीति व्यवजह्रुः। क्षणो हि निर्व्यापारस्थितिं वक्ति। प्रह्लादस्त्वब्रवीद् विप्रं क्षणो नास्ति द्विजर्षभ। त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते (भा० शां० १२४।२९)॥

अन्यत्पदं पदान्तरं भवति। अपदान्तरं त्वविलम्बितम्। भीमसेनमिदं वाक्यमपदान्तरमब्रवीत् (भा० वन० ३४।४)।

उचितमिति समवेतं युक्तम् अभ्यस्तमित्याह।/स्वभावसिद्धमप्याह। तथा च श्रीरामायणे प्रयोगः—उचितं च महाबाहुर्न जहौ हर्षमात्मवान् (२।१९।३७)।

कश्चिद् दोषेण गच्छतीत्यादौ गमिर्ज्ञानार्थ इति सप्रमाणमुक्तम् (पृ० १८३)। तत्रेदम्प्रमाणान्तरं संगृह्यताम्—न दोषेणावगन्तव्या कैकयी भरत

सङ्गृहीता यन्ता सारथिस्ते भविष्यामीत्यर्थे इयास्ते सङ्ग्रहीष्यामीत्यपि व्यवहारः (भा० वि० )। पौरोहित्यं तवाचरिष्यामीत्यर्थे गृहीष्यामि सर्वं यत् इत्येवोऽपि परिबृंहणम् व्यवहारः लेख्यते पुरा पूर्वैः (भा० आश्व० ५।२६)।

त्वया (रा० २।९२।३०)। इह स एवार्थोऽवगमिनोक्तः। अवस्तदर्थस्य द्योतकः।

दोषेण गन्तुं दोषेण मन्तुम् इत्युभयो व्यवहारः प्रदर्शितचरः। दोषेण शङ्कितुमित्यपि सुव्यवहरमिति प्रदर्श्यते—न मामर्हसि कल्याण दोषेण परिशङ्कितुम् (भा० वन० ७६।२६)।

विनार्थे बहिः शब्दः शतपथे—स बहिष्पवित्राद् गृह्णाति (४।१।१।३)।

समासः क्रियतामातिशायिकस्तद्धितो वेति सम्प्रधारणायां या व्यवस्थोक्ता (पृ० ५७) तां पुष्णती वैदिकी सूक्ताहुतिरियमा दीयताम्—अजानेवालभेरंस्ते हि सुश्रपतरा भवन्ति (श० ब्रा० ५।५।४।१)।

मन्यतेरपि मानयतेरर्थे प्रयोगः—निहन्मैन दुरात्मानं योऽयमस्मान्न मन्यते (भा० आदि० १८९।३)।

यर्हि वाक् प्रवदेत्तर्हि होतव्यमित्येकेषाम् (भा० श्रौ० ६।९।८)। यदा वयसां विरावः, यदा शकुनिप्रवाद इत्यर्थे प्रयोगः।

अहमात्मीयो न भविष्यामि (मृच्छ० ८)। जीविताद् हास्ये, कालं करिष्यामीत्याह।

नाकश्च स्वर्गश्च पर्यायावभिमतौ। सान्तरौ च तौ। तथा च शौनकीया आमनन्ति—ऊर्ध्वो नाकस्याधिरोह विष्टपं स्वर्गो लोक इति यं वदन्ति (अथर्व० ११।१।७)।

भावप्रधानानपि कांश्चिन्निर्देशान् शिष्टा प्रयुञ्जते। ते कतिपयेऽनुक्रम्यन्ते — नहि दुर्योधने राज्यं मधुरेण प्रदास्यति (भा० उ० ४।१९)। माधुर्येण साम्ना, मृदुनोपायेनेत्यर्थः। शिवेनाभिवदामि त्वां गच्छ युध्यस्व शत्रुभिः (भा० द्रोण० ४।१२)। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् (कठ० उ० ५।७)। स्थाणुं स्थाणुताम्। अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम् (शा० )। सोत्सुकम् इत्यौत्सुक्येन सह वर्तमानं यथा स्यात्तथेत्यर्थे प्रयुञ्जते कवयः। कलुषेण महता मेदिनी परिमुच्यताम् (रा० २।६६।२७)। कालुष्यार्थे कलुषशब्दप्रयोगः।

फलन्ति वृक्षा इत्यर्थे फलं गृह्णन्ति वृक्षा इत्यपि व्यवहारः प्रवृत्तिस्थः। तथा च तैत्तिरीयसंहितायां (२।२।६।६) प्रयोगः— संवत्सरे वनस्पतयः फलं गृह्णन्ति। अत एव कालेनो वृक्षः फलेग्रहिरुच्यते।

स्थेय इति विवादपदनिर्णेतरि संशयच्छेत्तरि प्रसिद्धः। तिङन्तात्स्थातेरपि स्थेयत्वेनाश्रयण प्रसिद्ध्यतीति किमपि परितोषाय वेद्यते — न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् (भा० उ० ३४।२०)।

विलम्बनेऽर्थे चिरं करोतीति प्रचरद्व्यवहारं वादी प्रयोगः सर्वथा व्यवहारानुपातीति मुक्तसंशयं ज्ञातुम् उत्तिष्ठ राजन्भुङ्क्ते न चिरं कर्तुमर्हसीति भारते (वन० २५०।६) प्रयोगदर्शनात्। मा चिरं कृथा इति (शल्य०५६।४१) इत्यत्र च वैरनिर्यातनेऽर्थे वैरोद्धरणमपि पुरा प्रयुञ्जते व्यवहारकोविदाः, यद्यपि साम्प्रतं व्यतिक्रममाणया हिन्दीभारत्या सुतमां संवदतीति विशेषं व्यवहारं विविदिषुभिः — ततः कालपरीतः सह वैरस्यो- द्धरणे स्त इति हि भारते (शां० ६।८) प्रयोगः।

करोतेः प्रयोगे किमः कर्मत्वे कर्मान्तरस्य शेष- विवक्षा भवति न च भवति। उभयथा व्यवहारो दृश्यते। तत्रापि कर्मत्वविवक्षया द्वितीयाप्रयोगो बहुलः, शेषत्वविवक्षया च षष्ठ्याः प्रयोगो विरलः। इमे च दाशतये द्वितीयाप्रयोगाः प्रदर्श्यन्ते — किं माघनिन्द्राः कृणवन्ननुक्थाः (४।२।३)। किं मा करन्नबला अस्य सेना (५।३०।९)। किं नूनमस्मान् कृणवदरातिः (८।४८।३)। किमङ्ग त्वां वृषाकपिश्चकार हरितो मृगः (१०।८६।३)। इति किं नो भावः करिष्यति भानं ना विपुलं तथा।

दुर्योधनः पार्थजले पुरा नौरिव मज्जति (भा० वि० ४३।२९)॥ इह न इति द्वितीयाषष्ठ्योः समानं रूपमिति त्वेकतरस्या अवधारणं नास्ति। करोतिश्चेद्धोपक्रियायां वर्तते न विक्रियायामिति विशेषः। वामनपुराणे तु व्यक्ततरा द्वितीयाप्रवृत्तिर्दृश्यते — न वेद्मि किं मां मधुहा करिष्यति (९१।२)। क्वचित्षष्ठ्यपि — किं मे क्रुद्धः करिष्यति (भा० शां० १५६।११)।

कथं भविष्यत्युचिता स्वकानाम् (भा० सौ० १०।२६)।
उचितेव प्रवासानां वैदेही प्रतिभाति मे (रा० २।६०।८) इत्यादिषु यथा।

केवलोऽपि नयतिः प्रयुज्यते — स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना (याज्ञ० १।३५५) इत्यत्र यथा। मानवेऽपि — सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना। न शक्यो न्यायतो नेतुम् (७।३०)। स दण्डः।

+ धारयामि विनयं परम्
( भा० वन० ३०।३८)।

